ओ३म्

# श्रीविष्णुपञ्चायतन-पूजनम्

जिसको

पं० गोविन्दराम (भट्टहुंडू)

२ संस्कृत टीचर स्टेट हाइ स्कूल ने

संशोधन करके प्रचलित हिन्दी भाषामें

'इतिकर्तव्यता' से संवलित किया। और

पं० विश्वनाथ एंड सन्स

फोटोग्राफर्स इत्यादिने

अपने आधिपत्यस्थ-

'कश्मीर प्रताप स्टीम प्रेस'

श्रीनगर कश्मीरमें छपाया है॥


शाकाब्दाः १८४१ नं०२०१५

वि०१९७६ मूल्यम् १)रु०

1919 Price 1 Re.

## श्रीसनातनधर्म्मिसज्जनगण !

पांच देवताओंमेंसे अपने अभीष्ट देवताको बीचमें बिठाकर बाकी चार देवताओंकोभी उसके इर्दगिर्द नीचेके क्रमसे रखकर उसी क्रमसे आवाहन पाद्य अर्घ्य आदि षोडशोपचार पूजन करें

पूर्व

उत्तर — दक्षिण

**विष्णुपञ्चायतन**

| | |
|---|---|
| २ शिव | ५ देवी |
| १ विष्णु | |
| ३ गणेश | ४ सूर्य |

**शिवपञ्चायतन**

| | |
|---|---|
| २ विष्णु | ५ देवी |
| १ शिव | |
| ३ सूर्य | ४ गणेश |

**गणेशपञ्चायतन**

| | |
|---|---|
| २ विष्णु | ५ देवी |
| १ गणेश | |
| ३ शिव | ४ सूर्य |

**सूर्यपञ्चायतन**

| | |
|---|---|
| २ शिव | ५ देवी |
| १ सूर्य | |
| ३ गणेश | ४ विष्णु |

**देवीपञ्चायतन**

| | |
|---|---|
| २ विष्णु | ५ सूर्य |
| १ देवी | |
| ३ शिव | ४ गणेश |

पश्चिम

स्मरण रखें कि घरमें दो शिवलिंगोंको, तीन गणेशोंको, तीन देवीप्रतिमाओंको, दो द्वारकाचक्रोंको, दो सूर्यप्रतिमाओंको, और दो शङ्खोंको न पूजें अर्थात् सालिग्राम दोके विना सम पूजने चाहियें, और एकके बिना विषम कभी न पूजें ॥ जल अग्नि पवित्रभूमि सूर्यमंडल सोना शिला वा रत्न आदिको प्रतिमा मानकर और सान्निधान रखकर पंचायतनका पूजन करें अथवा मनमेंही पंचायतनका ध्यान करके पूजन करना चाहिए ॥

# विष्णुपञ्चायतन[1]पूजनविधिः

अस्यश्री आसनशोधनमन्त्रस्य मेरुपृष्ठ[2] ऋषिः सुतलं छन्दः कूर्मो देवता आसनशोधने विनियोगः ॥ मेरुपृष्ठऋषये नमः शिरसि । सुतलं छन्दसे नमः मुखे । कूर्मो देवतायै नमः हृदि । आसनशोधने विनियोगाय नमः सर्वाङ्गेषु ॥

अञ्जलिं धृत्वा पृथिवीं प्रार्थयेत् । पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ समुद्रमेखले देवि पर्वतस्तनमण्डले । विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥

---

१ विष्णुं शिवं गणेशं च सूर्यं दुर्गां तथैव च । पञ्चानामर्चयेन्नित्यं देवलोके महीयते ॥

२ पृथिव्या मेरुपृष्टं तु ऋषिरित्यभिधीयते । सुतलं छन्द इत्याहुः कूर्मो वै देवता स्मृता । मेरोरारोहणे तस्य विनियोगः प्रकीर्तितः ॥

दर्भकाण्डद्वयं पृथिव्या आसनम्। ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं सर्वं ध्रुवो राजा विश्वामसि ॥ प्रीं पृथिव्यै आधारशक्त्यै आसनं नमः । प्रीं पृथिव्यै आधारशक्त्यै समालभनं गन्धो नमः। अर्घो नमः । पुष्पं नमः ॥

स्वेष्टदेवताक्रमेण पञ्चायतनं ध्यायन्नमस्कारं कुर्यात् । शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्याये सर्वविघ्नोपशान्तये ॥ अभिप्रीतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ वक्रतुण्ड महाकाय कोटिसूर्यसम प्रभो । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदय-

---

कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः । कुशाग्रे तु हरो देवस्त्रयो देवाः कुशे स्थिताः ॥
जातमात्रः भवेद्दर्भः साग्रमूलः कुशः स्मृतः । सप्तपर्णस्तु कुतपश्छिन्नाग्रं तृणमुच्यते ॥
कुशाभावे तथा काशान्दूर्वाव्रीहियवानपि । तदभावे तु नीवारांश्श्यामाकान्वा नियोजयेत्॥

स्थो जनार्दनः ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षा-न्महेश्वरः । गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः ॥ अखण्डमण्डलाकारं व्याप्तं येन चराचरम् । तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ *

गुरवे नमः । परमगुरवे नमः । परमेष्टगुरवे नमः । परमाचार्याय नमः । आदिसिद्धेभ्यो नमः ॥

---

## * विष्णुपञ्चायतनध्यानक्रमः ॥

ॐ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभांगम् । लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ १॥

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीति-हस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥ २॥

गजवदनमचिन्त्यं तीक्ष्णदंष्ट्रं त्रिनेत्रं बृहदुदरमनन्तं दन्तमाले दधानम् । परशुचषकपद्म-द्वन्द्वहस्तारभिन्दं हरियुगलनिविष्टं श्रीगणेशं भजामि ॥ ३ ॥

सशंखचक्रं रविमण्डले स्थितं कुशेशयाक्रान्तमनन्तमच्युतम् । भजामि बुद्ध्या तपनीयमूर्तिं सुरोत्तमं चित्रविभूषणोज्ज्वलम् ॥ ४ ॥

विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां कन्याभिः करवालखेटविलसद्धस्ताभिरा-सेविताम् । हस्तैश्चक्रदरालिखेटविशिखांश्चापं गुणं तर्जनीं बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥ ५ ॥

अनामिकाभ्यां दर्भकाण्डद्वयं धृत्वा　　आदौ गायत्री न्यासः[1] ॥

ॐ अ नाभौ । उ हृदि । म शिरसि ॥ ॐ भूः पादयोः । ॐ भुवः हृदि । ॐ स्वः शिरसि ॥ ॐ भूरङ्गुष्ठाभ्यां नमः । ॐ भुवः तर्जनीभ्यां नमः । ॐ स्वः मध्यमाभ्यां नमः । ॐ महः अनामिकाभ्यां नमः । ॐ जनः कनिष्ठिकाभ्यां नमः । ॐ तपः सत्यं करतलकरपृष्ठाभ्यां नमः ॥ ॐ भूः पादयोः । ॐ भुवः जान्वोः । ॐ स्वः गुह्ये । ॐ महः नाभौ । ॐ जनः हृदि । ॐ तपः कण्ठे । ॐ सत्यं शिरसि ॥ ॐ भूः हृदयाय नमः । ॐ भुवः शिरसे स्वाहा । ॐ स्वः शिखायै वषट् । ॐ महः कवचाय हुम् ।

---

१ देवमूर्तिः स्वयं भूत्वा देवार्चनपरो भवेत् । तत्तन्मन्त्रैर्न्यासरूपैर्नादेवो देवमर्चयेत् ॥ कुर्याद्यथोक्तविधिना प्राङ्मुखः शुचिमानसः । दर्भपाणिर्विनीतात्मा न्यासकर्म समासतः ॥ न्यासं विना भवेन्मूकः सुप्तः स्यादासनं विना । शिरोहीनो मृतः प्रोक्तो नग्नस्तु पलवं विना ॥ ऋषिदैवतच्छन्दोभी रहितश्च भुजङ्गमः । मन्त्राणां पलवो न्यासो मन्त्रानां प्रणवः शिरः ॥ शिरः पलवसंयुक्तो मन्त्रः कामदुगो भवेत् ॥ स्वाहाकारो वषट्कारो वट् वेट् वौषट् तथैव च । नमः स्वाहा इति प्रोक्तं हूं हुं फट् फाट् इति श्रुतिः ॥

ॐ जनः नेत्राभ्यां वौषट् । ॐ तपः सत्यमस्त्राय फ-
ट् ॥ ॐ तत्सवितुरङ्गुष्ठाभ्यां नमः । वरेण्यं तर्ज-
नीभ्यां नमः । भर्गोदेवस्य मध्यमाभ्यां नमः । धी-
महि अनामिकाभ्यां नमः । धियो यो नः कनिष्ठि-
काभ्यां नमः । प्रचोदयात्करतलकरपृष्ठाभ्यां नमः ॥
ॐ तत्पादयोः । सवितुर्जान्वोः । वरेण्यं कट्याम् ।
भर्गो नाभौ । देवस्य हृदये । धीमहि कण्ठे । धियो
नासिकायाम् । यः चक्षुषोः । नः ललाटे । प्रचोद-
याच्छिरसि ॥ ॐ तत्सवितुर्हृदयाय नमः । वरेण्यं
शिरसे स्वाहा । भर्गो देवस्य शिखायै वषट् । धी-
महि कवचाय हुम् । धियो यो नः नेत्राभ्यां वौषट् ।
प्रचोदयादस्त्राय फट् ॥ ॐ आपः स्तनयोः । ज्यो-
तिर्नेत्रयोः । रसो मुखे । अमृतं ललाटे । ब्रह्मभूर्भु-
वः स्वरों शिरसि ॥

ततः पुरुषसूक्तेन न्यासं कुर्यात् ॥

वामकरे । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

दक्षिणकरे । पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

वामपादे । एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥

दक्षिणपादे। त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥

वामजानौ । तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥

---

प्रथमं विन्यसेद्वामे पुरुषं दक्षिणे करे । एतावानस्य पादे तु त्रिपादूर्ध्वस्तु दक्षिणे ॥
तस्माद्विराड्वामजानौ यत्पुरुषेण दक्षिणे । तं यज्ञं तु तथा कट्यां तस्माद्यज्ञात्तु गुह्यके ॥
तस्माद्यज्ञात्तथा नाभौ तस्मादश्वा हृदि न्यसेत् । यत्पुरुषं तु ग्रीवायां ब्राह्मणो वामबाहवे ॥
दक्षिणे चन्द्रमाः चैव नाभ्या आसीत्तथा मुखे । सप्तास्यासंस्तथाक्ष्णोश्च मूर्ध्नि यज्ञेन विन्यसेत् ॥

दक्षिणजानौ। यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥६॥

कट्याम्। तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ७ ॥

गुह्ये। तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥ ८ ॥

नाभौ। तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥

हृदि। तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥१०॥

ग्रीवायां। यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखङ्किमस्य कौ बाहू का ऊरू पादा उच्येते ॥११॥

वामबाहौ। ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥१२॥

दक्षिणबाहौ। चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥

मुखे। नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयत् १४

नेत्रयोः। सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृतः। देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥

मूर्ध्नि। यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥ इति षोडशांगन्यासः ॥

ततः पञ्चांगन्यासः ॥ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत। हृदयाय नमः ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुर-

---

कनिष्ठांगुष्ठरहितैस्त्रिभिस्तु हृदि विन्यसेत्। मध्यमानामिकाभ्यां तु न्यसेच्छिरसि वेदवित् (मन्त्रवित्) ॥ शिखामंगुष्ठमात्रेण दशभिः कवचे न्यसेत्। हृदि नेत्रविन्यासो विन्यसेत्परमेश्वरि ॥ तर्जनीमध्यमाभ्यां तु ततोऽस्त्रं विन्यसेत्सदा ॥

जायत । शिरसे स्वाहा ॥ नाभ्या आसीदन्तरिक्षं
शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्त-
था लोकमकल्पयत् । शिखायै वषट् ॥ सप्तास्यास-
न्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं त-
न्वाना अबध्नन्पुरुषं पशुम् । कवचाय हुम् ॥ यज्ञेन
यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः स-
न्ति देवाः । अस्त्राय फट् ॥

पञ्चायतन के पांच मन्त्रों का न्यास

ओं तद्विष्णोः परमं[1] पदं हृदयाय नमः । सदा पश्य-
न्ति सूरयः[2] शिरसे स्वाहा । दिवीव चक्षुराततं[3] शि-
खायै वषट् । तद्विप्रासो विपण्यवो[4] कवचाय हुम् ।
जागृवांसः समिन्धते[5] नेत्राभ्यां वौषट् । विष्णोर्यत्प-
रमं पदं[6] अस्त्राय फट् ॥ ओं यो रुद्रो अग्नौ हृदया-

१ प्रकाशरूपिणे २ परब्रह्मस्वरूपिणे ३ विश्वरूपिणे ४ नित्यानन्दस्वरूपिणे ५ सकलचै-
तन्यरूपिणे ६ दानवान्तकारिणे ॥

य नमः । यो अप्सु य ओषधीषु शिरसे स्वाहा । यो वनस्पतिषु शिखायै वषट् । यो रुद्रो विश्वा भुवना विवेश कवचाय हुम् । तस्मै रुद्राय नेत्राभ्यां वौषट् । नमो अस्तु देवा अस्त्राय फट् ॥

ओं गणानां त्वा गणपतिं हवामहे हृदयाय नमः । कविङ्कवीनां शिरसे स्वाहा । उपमश्रवस्तमं शिखायै वषट् । [1]ज्येष्ठराजं ब्रह्मणां कवचाय हुम् । ब्राह्मणस्पत आ नः शृण्वन्नेत्राभ्यां वौषट् । ऊतिभिः सीदसादनमस्त्राय फट् ॥

ओं चित्रं पादयोः । देवानां जङ्घयोः । उदगाज्जान्वोः । अनीकं ऊर्वोः । चक्षुः शिश्ने । मित्रस्य गुह्ये । वरुणस्य नाभौ । अग्नेर्हृदि । आप्रा द्यावापृथिवी कण्ठे । अन्तरिक्षं बाह्वोः । सूर्य मुखे । आत्मा नासिकायां । जगतः नेत्रयोः । तस्थुषः ललाटे । च

१ जेष्ठराजं ब्रह्मणां [ब्रह्माणं] ब्राह्मणस्पते कवचाय हुम् । आ नः शृण्वन्नेत्राभ्यां वौषट्

शिरसि ॥

ॐ जात शिखायां। वेदसे ललाटे। सुनवाम कर्ण-
योः। सोमं नासिकायां। अराती चक्षुषोः। यत
ओष्ठयोः। नि दन्तेषु। दहाति तालुनि। वेदो
जिह्वायां। स ग्रीवायां। नः बाह्वोः। पर्षत् हृदि।
अति स्तनयोः। दुः कुक्षौ। गाणि नाभौ। विश्वा
पृष्ठे। नावा पाण्योः। इव वृषणयोः। सिन्धुं शिश्ने।
दुः कट्याम्। इत ऊर्वोः। अति जङ्घयोः। अग्निः
पादयोः ॥

इति पञ्चायतन न्यासविधिः ॥

चारों ओर तिल-सर्षप और जवों को फेंकें

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकर्तारस्ते नशन्तु शिवाज्ञया॥ पाषाण्डकारिणो भूता भूता भूम्यन्तरिक्षगाः। दिविलोके स्थिता ये च ते नशन्तु शिवाज्ञया॥ भूताः प्रेताः पिशाचाश्च राक्षसाश्च सरीसृपाः। अपसर्पन्तु ते सर्वे दिव्यास्त्रेणैव ताडिताः॥

पृथ्वी पर बायाँ पाष्र्णी मारने से इस पर ठहरे विघ्नकारकों का निवारण, दायें हाथ से तीनबार चटखाने से अन्तरिक्ष में ठहरे विघ्नकारकों का निवारण, तथा बायें हाथ पर दायें हाथ से तीनबार ताली मारने से द्युलोक में ठहरे विघ्नकारकों का निवारण करके प्राणायाम करें। एक प्राणायाम में पूरक कुम्भक और रेचक किये जाते हैं।

पूरक=दायें अंगूठे से दायें नथने को बन्द करके, बायें नथने से सांस को शनैः २ अन्दर खींचते जाना और रक्तवर्ण (सुर्खरंग) ब्रह्मा जी का नाभिस्थान (नाफ) पर ध्यान धरते एकबार मन्त्र पढना॥

कुम्भक=कनिष्टा अनामिका और अंगूठे से दोनों नथनों को बन्द करके सांस (प्राण) को हृदय में ठहरा कर, हृदयकमल पर नीलवर्ण विष्णु का ध्यान धरते, दो बार मन्त्र को जापते जाना॥

रेचक=दायें नथने पर से अंगूठे को उठा कर बिल्कुल आहिस्ता २ सांस छोडते जाना, और ललाट में सहस्रदलकमल (हजारबर्ग वाले कंवल) पर स्फटिक (बिल्लोर) वर्ण शिव जी का ध्यान धारण करते तीन बार मन्त्र का पढना॥

ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यम् ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयादोम् आपो ज्योती रसोमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ ३ ॥

## १ पृष्ठ से ३ पृष्ठ तक मन्त्रों से क्रिया करने की विधि हिन्दी में

१ सफे के **'अस्य श्री'** इत्यादि से—भद्रपीठ पर विष्टर (मोटक) और अक्षत सहित जलपूर्ण धारापात्र से आसन शोधन के विनियोगार्थ जल की धारा छोड़ें ॥

१ सफे के **'मेरुपृष्ठ ऋषये नमः शिरसि'** इत्यादि चार मन्त्रों से—सिर-मुख-हृदय और सब अंगों को क्रम से हाथों से स्पर्श करें ॥

१ सफे के **'पृथ्वि त्वया'** इत्यादि से—उपर धारण करने के, और पादों का स्पर्श क्षमा करने के, लिए अञ्जलि धरकर पृथिवी से प्रार्थना करें ॥

२ सफे के **'ध्रुवा द्यौः'** इत्यादि मन्त्र से—पृथिवी के लिए आसन दो दर्भकांड अपने आगे पृथिवी पर रखकर फिर पृथिवी को तिलक अक्षत और पुष्प भी चढायें ॥

२ सफे के **'शुक्लाम्बरधरम्'** इत्यादि को—अपने २ इष्ट देव के क्रम से (क्रम उपर लिखा है) पञ्चायतन और गुरु का ध्यान धर के, और नमस्कार धारणकर पढें ॥

---

## ४ पृष्ठ से ११ पृष्ठ तक अंगन्यास करने के लिए, दोनों अनामिकाओं से दो दर्भकांड पकड कर, प्रत्येक मंत्र से प्रत्येक अंग 'जिनके नाम मन्त्रों में हैं' को, दोनों हाथों से स्पर्श करें ॥

### अंगों के संस्कृत नामों के हिन्दी में अर्थ और न्यास करने का तरीका :—

**नाभौ** नाफ को दोनों हाथों की अंगुलियों से स्पर्श करें

**हृदि** हृदय को दोनों हाथों की तर्जनी-मध्यमा और अनामिकाओं से स्पर्श करें

**शिरसि** सिर को दोनों हाथों की मध्यमा और अनामिकाओं से स्पर्श करें

**पादयोः** पादों को दोनों हाथों की सब अंगुलिया से स्पर्श करें

**अंगुष्ठाभ्यां नमः** अंगूठों को अपनी २ अंगुलियों से स्पर्श करें

**तर्जनीभ्यां नमः** दायें अंगूठे से दाईं तर्जनी, और बायें अंगूठे से बाईं तर्जनी को

**मध्यमाभ्यां नमः** दायें अंगूठे से दाईं मध्यमा, और बायें अंगूठे से बाईं मध्यमा को

**अनामिकाभ्यां नमः** दायें अंगूठे से दाईं अनामिका और बायें अंगूठे से बाईं अनामिका को स्पर्श करें

**कनिष्ठिकाभ्यां नमः** दायें अंगूठे से

दाईं कनिष्ठा औरबायें अंगूठे से बाईं कनिष्ठा
**करतलकरपृष्ठाभ्यां नमः** दायें अंगूठे से दाईं हथेली और इस की पीठ को और बायें अंगूठे से बाईं हथेली और इस की पीठ को स्पर्श करें

**जान्वोः** दायें हाथ से दायें, और बायें हाथ से बायें घुटने को स्पर्श करें

**गुह्ये** गुह्यस्थान को स्पर्श करें

**कण्ठे** कंठ को स्पर्श करें

**हृदयाय नमः** उपर के 'हृदि' की तरह

**शिरसे स्वाहा** उपर के 'शिरसि' की तरह

**शिखायै वषट्** बोधी को केवल दो अंगूठोंसे

**कवचाय हुम्** उरस्त्राण वा वस्त्र को सब अंगुलियों से स्पर्श करें

**नेत्राभ्यां वौषट्** उपर के 'हृदि' की तरह

**अस्त्राय फट्** दायें हाथ को सिर के चारों-ओर घुमा लाकर, दाईं तर्जनी और मध्यमा से बाईं हाथ की हथेली पर ताली मार कर चटखायें ॥

**कट्याम्** कमर को दोनों हाथों से

**हृदये** उपर के 'हृदि' की तरह

**नासिकायाम्** नाक को दोनों हाथों से

**चक्षुषोः** नेत्रों को ,, ,,

**ललाटे** माथे को ,, ,,

**स्तनयोः** थनों को ,, ,,

**मुखे** मुख को ,, ,,

**वामकरे** दाईं हथेली पर बाईं हथेली रखें

**दक्षिणकरे** बाईं हथेली पर दाईं हथेली रखें

**वामपादे** बायें पाद पर दोनों हाथ रखें

**दक्षिणपादे** दायें पाद पर दोनों हाथ रखें

**वामजानौ** बायें घुटने पर दोनों हाथ रखें

**दक्षिणजानौ** दायें पाद पर दोनों हाथ रखें

**ग्रीवायाम्** गर्दन पर दोनों हाथ रखें

**वामबाहौ** बायें बाजों पर दोनों हाथ रखें

**दक्षिणबाहौ** दायें बाजों पर दोनों हाथ रखें

**मूर्ध्नि** उपर के 'शिरसि' की तरह

**जंघयोः** दो टांगों को दो हाथों से

**ऊर्वोः** दो रानों को दो हाथों से

**शिश्ने** लिंग स्थान को

**बाह्वोः** एक ही बार दायें हाथ से दायें बाजों और बायें हाथ से बायें बाजों को

**नेत्रयोः** नेत्रों को अपने २ तरफ के हाथ से

**शिखायाम्** बोधी को उपर के 'शिखायै वषट्' की तरह

**कर्णयोः** कानों को अपने २ तरफ के हथ से

**ओष्ठयोः** होंठों को
**दन्तेषु** दान्तों को
**तालुनि** तालु को
**जिह्वायाम्** जबान को
} चारों के लिये होंठों पर हाथ रखना

**कुक्षौ** पेट को।

**पृष्ठे** पीठ को

**पाण्योः** दो हाथों को

**वृषणयोः** अंडकोषों (खायों) को।

---

हृदय और मुख को जल छिड़कें

तीर्थे स्नेयं तीथमेव समानानां भवति । मा नः शँसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य रक्षा णो ब्रह्मणस्पते ॥

अनामिका की अगली घांट पर पवित्र का धारण करें

वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम् । अयक्ष्मा वः प्रजया सँसृजामि रायस्पोषेण बहुला भवन्तीः ॥

पुरोहित यजमान को तिलक लगावे

ओषधयः संवदन्ति सोमेन सह राज्ञा यस्मै करोति ब्राह्मणस्त्वं राजन्पारयामसि ॥ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव आयुरारोग्यमैश्वर्यमेतत्त्रितयमस्तु ते जीव त्वं शरदश्शतम् ॥

यजमान अपनी मध्यमा से तिलक करें

परमात्मने पुरुषोत्तमाय पञ्चभूतात्मकाय विश्वात्मने मन्त्रनाथाय आत्मने नारायणायाधारश-

---

विष्णुः । कर्णे कण्ठे ललाटे च त्रिस्थाने च त्रिदैवतम् । तिलकं धारयेद्योहि तस्य लक्ष्मीं दधाम्यहम् ॥ अंगुष्ठः पुष्टिदः प्रोक्तः संहारे तर्जनी तथा । आयुष्कामा मध्यमा स्याच्छ्रियं ददात्यनामिका । प्रियंकरी कनिष्ठा च तिलकस्य विधिः स्मृतः ॥ अन्यच्च । दैवे पैत्र्ये तथांगुष्ठः तर्जनी शत्रुघातिनी मध्यमा वश्यदा प्रोक्ता ह्यन्नदाऽनामिका भवेत् ॥

क्त्यै समालभनं गन्धो नमः अर्घो नमः पुष्पं नमः ॥

दीप को तिलक अक्षत और पुष्प चढायें। स्वप्रकाशो महादीपः सर्वतस्तिमिरापहः । प्रसीद मम गोविन्द दीपोऽयं परिकल्पितः ॥

धूप को तिलक अक्षत और पुष्प चढायें। वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः । आह्वानं सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

सूर्य को तिलक अक्षत और पुष्प चढायें। नमो धर्मनिधानाय नमः स्वकृतसाक्षिणे । नमः प्रत्यक्षदेवाय भास्कराय नमो नमः ॥

विछर वाले धारापात्र से सालिग्राम पर जल देवें। यत्रास्ति माता न पिता न बन्धुर्भ्रातापि नो यत्र सुहृज्जनश्च । न ज्ञायते यत्र दिनं न रात्रिस्तत्रात्मदीपं शरणं प्रपद्ये ॥ आत्मने नारायणायाधारशक्त्यै धूपदीपसङ्कल्पात्सिद्धिरस्तु धूपो नमः दीपो नमः ॥ आज के मास, कृष्ण वा शुक्ल पक्ष, तिथि और वार का नाम उच्चारण करके :—

( स्मरण रखें कि सब जगह 'ओं तत्सद्ब्रह्म' पर इसी प्रकार करना होगा )

ओं तत्सद्ब्रह्म अद्यतावत्तिथावत्रामुकमासस्यामुकपक्षस्य तिथावमुकायाममुकवासरान्वितायाम् ॥ महागणपतये कुमाराय

श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वारदेवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्म-विष्णु-महेश्वर-देवताभ्यः चतुर्वेदेश्वराय सानुचराय मासपतये नारायणाय। नीचे के मासपति मन्त्रों में से केवल एक 'जो आज चल रहा है' का नाम लेवें (मार्गशीर्षे रुक्मिणीसहिताय कृष्णाय, श्रीसहिताय केशवाय ॥ पौषे प्रियासहितायानन्ताय, वागीश्वरीसहिताय नारायणाय ॥ माघे प्रीतिसहितायाच्युताय, कान्तासहिताय माधवाय ॥ फाल्गुने शक्तिसहिताय चक्रिणे, क्रियासहिताय गोविन्दाय ॥ चैत्रे सिद्धिसहिताय वैकुण्ठाय, शक्तिसहिताय विष्णवे ॥ वैशाखे श्रीसहिताय जनार्दनाय, विभूतिसहिताय मधुसूदनाय। ज्येष्ठे महिमासहितायोपेन्द्राय, इच्छासहिताय त्रिविक्रमाय ॥ आषाढे लक्ष्मीसहिताय यज्ञपुरुषाय, प्रीतिसहिताय वामनाय ॥ श्रावणे कान्तिसहिताय

वासुदेवाय, रतिसहिताय श्रीधराय ॥ भाद्रपदे प्राप्ति-
सहिताय हरये मायासहिताय हृषीकेशाय। आश्वयु-
जे प्राकाम्यासहिताय योगेश्वराय, धीसहिताय पद्म-
नाभाय ॥ कार्तिके लघिमासहिताय पुण्डरीकाक्षाय,
महिमासहिताय दामोदराय ॥ मलिम्लुचे शक्तिस-
हिताय योगीशाय, सत्यभामासहिताय नरकारये, नि-
ष्कलासहिताय महामार्तण्डनाथाय।) दुर्गायै त्र्यम्ब-
काय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृ-
गणदेवताभ्यः। भगवते वासुदेवाय सङ्कर्षणाय प्रद्यु-
म्नाय अनिरुद्धाय सत्याय पुरुषाय अच्युताय माध-
वाय गोविन्दाय सहस्रनाम्ने विष्णवे लक्ष्मीसहिता-
य नारायणाय॥ भगवते भवाय देवाय शर्वाय देवा-
य रुद्राय देवाय पशुपतये देवाय उग्राय देवाय भी-
माय देवाय ईशानाय देवाय ईश्वराय देवाय महादे-

वाय पार्वतीसहिताय परमेश्वराय ॥ भगवते विनाय-
काय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बो-
दराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नेशाय
विघ्नभक्ष्याय वल्लभासहिताय महागणेशाय ॥
भगवते ह्रांह्रींसः सूर्याय सप्ताश्वाय अनश्वाय एका-
श्वाय नीलाश्वाय प्रत्यक्षदेवाय तेजोरूपाय परमार्थ-
साराय भास्कराय प्रभासहिताय आदित्याय ॥ भग-
वत्यै अमायै कामायै चार्वङ्ग्यै टंकधारिण्यै तारायै
पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभग-
वत्यै श्रीमहाराज्ञीभगवत्यै श्रीज्वालाभगवत्यै वित-
स्ताभगवत्यै गङ्गाभगवत्यै यमुनाभगवत्यै सिद्धल-
क्ष्म्यै महालक्ष्म्यै महात्रिपुरसुन्दर्यै सहस्रनाम्न्यै दे-
व्यै भवान्यै ॥ हेरुकादिभ्यः । वटुकादिभ्यः ॥ नित्य-
कर्मदेवताभ्यः । धूपदीपसङ्कल्पात्सिद्धिरस्तु धूपो न-

मः दीपो नमः ॥ अपसव्येन । बाईं भुजामें यज्ञोपवीत डालके तिलों समेत जलों से मृत पितरों को जल देवें

नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे । नमो
यमाय रुद्राय कान्तारपतये नमः ३ । ॐ तत्सद्ब्रह्म अद्य
तावत् तिथावद्यामुकमासस्यामुकपक्षस्य तिथावमुकायाममुकवासरान्वि-
तायाम् ॥ पित्रे पितामहाय प्रपितामहाय । मात्रे
पितामह्यै प्रपितामह्यै । मातामहाय प्रमातामहाय
वृद्धप्रमातामहाय । मातामह्यै प्रमातामह्यै वृद्धप्र-
मातामह्यै । इत्यादि ॥ समस्तमातापितृभ्यो द्वादश-
दैवतेभ्यः पितृभ्यो धूपस्स्वधा दीपस्स्वधा । सव्येन ।

दाईं भुजा में यज्ञोपवीत धारण करके विष्टर और जल से पूर्ण धारापात्र में गन्ध और तीन पुष्प डालें

सँ वः सृजामि हृदयँ
सँसृष्टं मनो अस्तु वः । सँसृष्टास्तन्वः सन्तु वः सँसृष्टः
प्राणो अस्तु वः ॥ सं यावः प्रियास्तन्वः सं प्रिया हृद-
यानि वः । आत्मा वो अस्तु सं प्रियः सं प्रियस्तन्वो
मम ॥ अब इसी जल से पंचायतन को जीवादान देदेवें । अश्विनोः प्राण इति जीवादानं दद्यात् ॥
अश्विनोः प्राणस्तौ ते प्राणं दत्तां तेन जीव । मित्राव-

रुणयोः प्राणस्तौ ते प्राणं दत्तां तेन जीव। बृहस्पतेः प्राणः स ते प्राणं ददातु तेन जीव । श्रीविष्णुपञ्चायतनदेवताभ्यो जीवादानं परिकल्पयामि नमः ॥

दो दर्भकांडों से अपनी देह की तरह देवता का अंगन्यास करें। स्वदेहवद्देवांगेषु पूर्ववन्न्यासं कुर्यात् ॥

अ नाभौ० । सहस्रशीर्षा० १६ । तद्विष्णोः० । यो-रुद्रो अग्नौ० । गणानां त्वा० । चित्रन्देवानां० । जातवेदसे० । विष्णुपञ्चायतनदेवताभ्यो न्यासं परिकल्पयामि नमः ॥ ततः पृच्छामारभेत् ॥

अक्षत के समेत दर्भकांडों को दायें हाथ से सीधा पकडकर और बायें हाथ से ÷ घंटा को बजाते पृच्छा का आरम्भ करें। फिर 'अर्चामहं करीष्ये' पर पहुंच कर अक्षतों को कन्धों पर से तथा दर्भ काण्डों को निर्माल्यपात्र में फेकें। मन में संकल्प यह करें कि 'ॐ कुरुष्व इस उत्तर से मेरे पृश्न को देवता स्वीकार करते हैं ॐ भूः पुरुषमावाहयामि नमः। ॐ भुवः पुरुषमावाहयामि नमः। ॐ स्वः पुरुषमावाहयामि नमः। ॐ भूर्भुवस्स्वः पुरुषमावाहयामि नमः ३ ॥ ॐ भूर्भुवस्स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ ३ ॥ ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षि शि-

---

१ यथा देहे तथा देवे न्यासकर्म समाचरेत्। विना न्यासेन यत्कर्म त्वर्धं गृह्णन्ति राक्षसाः । न्यासमूलमिदं सर्वं तस्मान्न्यासं तु कारयेत् ॥

÷ आवाहने चैव विसर्जने च स्नाने तथा चामरे दीपदाने । नैवेद्यदाने च तथार्घ्यदाने घण्टा विनाद्या ननु सप्तवारम्॥ आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् । कुर्याद्घण्टारवं तत्र देवताह्वानसंनिधौ ॥

रोरुबाहवे। सहस्रनाम्ने पुरुषाय शाश्वते सहस्रको
टीयुगधारिणे नमः ३ ॥ ऊँ वासुदेवाय विद्महे नारा-
यणाय धीमहि। तन्नो विष्णुः प्रचोदयात् ३ ॥ ऊँ
जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन। नमस्तेऽस्तु
हृषीकेश महापुरुषपूर्वज ३ ॥ ऊँ नमः कारणवाम-
नाय गोब्राह्मणहिताय च। जगद्धिताय कृष्णाय
गोविन्दाय नमो नमः ३ ॥ ऊँ विश्वरूपाय विद्महे
विश्वज्ञानाय धीमहि। तन्नो विष्णुः प्रचोदयात् ३ ॥
ऊँ नरसिंहाय विद्महे नरकोत्तारणाय धीमहि।
तन्नो विष्णुः प्रचोदयात् ३ ॥ ऊँ तत्पुरुषाय विद्महे
महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ३ ॥ ऊँ
तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती
प्रचोदयात् ३ ॥ ऊँ भास्कराय विद्महे सहस्ररश्मये
धीमहि। तन्नः सूर्यः प्रचोदयात् ३ ॥ ऊँ सुभगायै

विद्महे काममालिन्यै धीमहि । तन्नो दुर्गा प्रचोद-
यात् ६ ॥ ॐ तत्सद्ब्रह्म० अद्यतावत्० ।

भगवतः मासपतेर्नारायणस्य । मार्गशीर्षे रुक्मिणी-
सहितस्य कृष्णस्य, श्रीसहितस्य केशवस्य । पौषे
प्रियासहितस्यानन्तस्य, वागीश्वरीसहितस्य नाराय-
णस्य । माघे प्रीतिसहितस्याच्युतस्य,कान्तासहितस्य
माधवस्य । फाल्गुने शक्तिसहितस्य चक्रिणः क्रिया
सहितस्य गोविन्दस्य । चैत्रे सिद्धिसहितस्य वैकुण्ठ-
स्य, शक्तिसहितस्य विष्णोः । वैशाखे श्रीसहितस्य
जनार्दनस्य, विभूतिसहितस्य मधुसूदनस्य । ज्येष्ठे
महिमासहितस्योपेन्द्रस्य, इच्छासहितस्य त्रिविक्रम-
स्य । आषाढे लक्ष्मीसहितस्य यज्ञपुरुषस्य, प्रीति-
सहितस्य वामनस्य । श्रावणे कान्तिसहितस्य वासु-
देवस्य, रतिसहितस्य श्रीधरस्य । भाद्रपदे प्राप्तिस-

हितस्य हरेः, मायासहितस्य हृषीकेशस्य । आश्व-
युजे प्राकाम्यासहितस्य योगेश्वरस्य, धीसहितस्य
पद्मनाभस्य । कार्तिके लघिमासहितस्य पुंडरीका-
क्षस्य, महिमासहितस्य दामोदरस्य । मलिम्लुचे
शक्तिसहितस्य योगीशस्य, सत्यभामासहितस्य नर-
कारेः, निष्कलासहितस्य महामार्तण्डनाथस्य ॥ )
दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य अग्नि-
ष्वात्तादीनां पितृगणदेवतानाम् । भगवतः वासुदे-
वस्य सङ्कर्षणस्य प्रद्युम्नस्य अनिरुद्धस्य सत्यस्य
पुरुषस्य अच्युतस्य माधवस्य गोविन्दस्य सहस्र-
नाम्नो विष्णोः, लक्ष्मीसहितस्य नारायणस्य ।
भगवतः भवस्य देवस्य शर्वस्य देवस्य रुद्रस्य देव-
स्य पशुपतेः देवस्य उग्रस्य देवस्य भीमस्य देवस्य
ईशानस्य देवस्य ईश्वरस्य देवस्य महादेवस्य पार्व-

तीसहितस्य परमेश्वरस्य ॥ भगवतः विनायकस्य एकदन्तस्य कृष्णपिङ्गलस्य गजाननस्य लम्बोदरस्य भालचन्द्रस्य हेरम्भस्य आखुरथस्य विघ्नेशस्य विघ्नभक्षयस्य वल्लभासहितस्य महागणेशस्य ॥ भगवतः ह्रांह्रींसः सूर्यस्य सप्ताश्वस्य अनश्वस्य एकाश्वस्य नीलाश्वस्य प्रत्यक्षदेवस्य तेजोरूपस्य परमार्थसारस्य भास्करस्य प्रभासहितस्य आदित्यस्य ॥ भगवत्याः अमायाः कामायाः चार्वङ्ग्याः टंकधारिण्याः तारायाः पार्वत्याः यक्षिण्याः श्रीशारिकाभगवत्याः श्रीशारदाभगवत्याः श्रीमहाराज्ञीभगवत्याः श्रीज्वालाभगवत्याः वितस्ताभगवत्याः गङ्गाभगवत्याः यमुनाभगवत्याः सिद्धलक्ष्म्याः महालक्ष्म्याः महात्रिपुरसुन्दर्याः सहस्रनाम्न्याः देव्याः भवान्याः ॥ हेरुकादीनाम् । वटुकादीनाम् ॥

नित्यकर्मदेवतानाम् । आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं श्रीविष्णुपञ्चायतनप्रीत्यर्थं विष्णुपञ्चायतनपूजनं अर्चामहं करिष्ये । ॐ कुरुष्व ॥

तिलसर्षपयवान्विकीर्य ] तिल-सर्षप-और जवों को कन्धों पर से फेंककर । नीचे के दो मन्त्र और मासपति मन्त्र पढें । फिर प्रत्येक देवता के अपने २ सब नामों (जो २३ वें सफे पर से पूरे लिखे गये हैं । और यहां पुस्तक बडजाने के भय से संक्षेप में लिखदिये) को उच्चारण करके प्रत्येक देवता के आगे दो२ दर्भकाण्ड आसन के लिए रक्खें ॥

पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं सर्वं ध्रुवो राजा विशामसि ॥ भगवतः मासपतेर्नारायणस्य मार्गशीर्षे [ इत्यादि ] इदमासनं नमः ॥

भगवतः वासुदेवस्य ८ इदमासनं नमः ॥

भगवतः भवस्य देवस्य ८ इदमासनं नमः ॥

भगवतः विनायकस्य ८ इदमासनं नमः ॥

भगवतः ह्रांह्रींसः सूर्यस्य ८ इदमासनं नमः ॥

भगवत्याः अमायाः ८ इदमासनं नमः ॥

अक्षतों के समेत दो दर्भ काण्डों को अंगुलियों के सिरों की तरफ सिरे करके, अनामिका और मध्यमा पर अंगूठे से दबा कर, देवता से पूजा करने के लिए प्रार्थना करें । फिर 'युष्मान्पूजयामि' पर केवल अक्षतों को ही कन्धों पर से फेंकें ॥ 'ॐ पूजय' पर मन में संकल्प करें कि देवता पूजाकरने के लिए हमें आज्ञा देते हैं कि हाँ पूजा करो ॥

भगवते मासपतये नारायणाय मार्गशीर्षे (इत्यादि) भगवते वासुदेवाय ८ भगवते भवाय देवाय ८ भगवते विनायकाय ८ ह्रांह्रींसः सूर्याय ८ भगवत्यै अमायै ८ युष्मान्पूजयामि ॥ ॐ पूजय ॥

उन्हीं दर्भकाण्डों को नये अक्षतों के समेत पहले की तरह ही पकड कर, बायें हाथ से घण्ठा को बजाते प्रतिमा पर आने के लिए देवता का आवाहन करें । फिर 'आवाहयिष्यामि' पर कन्धों परसे अक्षतों को फेंके । दर्भों को तो निर्माल्य में फेंक देवें और 'ॐ आवाहय' पर फिर मन में यह संकल्प करें कि देवता प्रतिमा पर आना स्वीकार करते हैं ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य वृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही दे-

वस्य सवितुः परिष्टुतिः ॥ देवश्रुतौ देवेष्वाघोषे-
थाम् ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पाँसुरे ॥ इरा[1]वती धेनुमती हि भूतँ सू-
यवसिनी मन[2]वे दशस्या । व्यष्टभ्ना[3] रोदसी विष्ण-
वेते दाधर्थ पृथिवीमभितो मयूखैः ॥ वैष्णवमसि
विष्णुस्त्वोतुभ्नातु ॥ दिवो वा विष्ण उत वा पृथि-
व्या महो वा विष्ण उरोरन्तरिक्षात् । हँस्तौ[4] पृणस्व
बहुभिर्वसव्यैराप्रयच्छ दक्षिणादुत सव्यात् ॥ वि-
ष्णोर्नु कं वीर्य्याणि प्रवोचं यः पार्थिवानि विममे
रजाँसि । यो अस्कभायदुत्तरँ सधस्थं[5] विचक्रमाण-
स्त्रेधोरुगायः ॥ विष्णोः पृष्टमसि । विष्णोरराटमसि ।
विष्णोः श्नप्त्रे स्थः । विष्णोः स्यूरसि । विष्णोर्ध्रुवोऽ-
सि । वैष्णवमसि विष्णवे त्वा ॥ प्र तद्विष्णुः स्तवते
वीर्य्येण मृगो न भीमः[6] कुचरो गिरिष्ठाः । यस्योरुष्व

---

१ ळा २ नुषे ३ स्क (स्त) ४ उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्यात् ॥
५ धः स्थं ६ म

त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥
भगवन्तं मासपतिं नारायणं (मार्गशीर्षे रुक्मिणीसहितं कृष्णं श्रीसहितं केशवम्। पौषे प्रियासहितमनन्तं वागीश्वरीसहितं नारायणम् । माघे प्रीतिसहितमच्युतं कान्तासहितं माधवम् । फाल्गुने शक्तिसहितं चक्रिणं क्रियासहितं गोविन्दम् । चैत्रे सिद्धिसहितं वैकुण्ठं शक्तिसहितं विष्णुम् । वैशाखे श्रीसहितं जनार्दनं विभूतिसहितं मधुसूदनम्। ज्यैष्ठे महिमासहितमुपेन्द्रम् ,इच्छासहितं त्रिविक्रमम्। आषाढे लक्ष्मीसहितं यज्ञपुरुषं प्रीतिसहितं वामनम् । श्रावणे कान्तिसहितं वासुदेवं रतिसहितं श्रीधरम्। भाद्रपदे प्राप्तिसहितं हरिं मायासहितं हृषीकेशम् । आश्वयुजे प्राकाम्यासहितं योगीश्वरं धीसहितं पद्मनाभम् । कार्तिके लघिमा-

सहितं पुण्डरीकाक्षं महिमासहितं दामोदरम् ।
मलिम्लुचे शक्तिसहितं योगीश्वरं सत्यभामासहितं
नरकारिं निष्कलासहितं महामार्तण्डनाथम् ॥ )
भगवन्तं वासुदेवं सङ्कर्षणं प्रद्युम्नं अनिरुद्धं सत्यं
पुरुषं अच्युतं माधवं गोविन्दं सहस्रनामानं विष्णुं
लक्ष्मीसहितं नारायणम् ॥ भगवन्तं भवं देवं शर्वं
देवं रुद्रं देवं पशुपतिं देवं उग्रं देवं भीमं देवं ईशानं
देवं ईश्वरं देवं महादेवं पार्वतीसहितं परमेश्वरम् ॥
भगवन्तं विनायकं एकदन्तं कृष्णपिङ्गलं गजाननं
लम्बोदरं भालचन्द्रं हेरम्बं आखुरथं विघ्नेशं विघ्न-
भक्ष्यं वल्लभासहितं महागणेशम् ॥ भगवन्तं ह्रां
ह्रीं सः सूर्यं सप्ताश्वं अनश्वं एकाश्वं नीलाश्वं प्रत्य-
क्षदेवं तेजोरूपं परमार्थसारं भास्करं प्रभासहितं
आदित्यम् ॥ भगवतीं अमां कामां चार्वङ्गीं टंक-

धारिणीं तारां पार्वतीं यक्षिणीं श्रीशारिकाभगवतीं श्रीशारदाभगवतीं श्रीमहाराज्ञीभगवतीं श्रीज्वालाभगवतीं वितस्ताभगवतीं गङ्गाभगवतीं यमुनाभगवतीं सिद्धलक्ष्मीं महालक्ष्मीं महात्रिपुरसुन्दरीं सहस्रनाम्नीं देवीं भवानीं । विष्णुपञ्चायतनदेवता आवाहयिष्यामि । ॐ आवाहय ॥

अथ विष्णोरावाहनम् ॥ विष्णोः के अनन्त ऐश्वर्य और महिमा 'जैसे नीचे श्लोकों में गाये हैं' स्मरण करके, विष्णु प्रतिमा पर पुष्प चढावें ॥

आवाहयाम्यमरवृन्दनतांघ्रियुग्मं लक्ष्मीपतिं भुवनकारणमप्रमेयम् । आद्यं सनातनतनुं प्रणवासनस्थं पूर्णेन्दुभास्करहुताशसहस्ररूपम् ॥१॥
ध्येयं परं सकलतत्त्वविदां वरेण्यं वाराहकापिलनृकेसरिसौम्यमूर्तिम् । श्रीवत्सकौस्तुभमहामणिभूषिताङ्गं कामोदकीकमलकम्बुरथाङ्गहस्तम् ॥२॥

१ ङ्घ्रि

त्वं सर्वगोऽसि भगवन्! किल यद्यपि त्वामावाह-
यामि हि यथा व्यजनेन वायुम्। गूढो यथैव दहनो
मथनादुपैति ह्यावाहितोऽसि त्वमुपैषि गृहाण चा-
र्चाम् ॥ ३ ॥ मालाधराच्युत! विभो! परमात्ममूर्ते!
सर्वज्ञ! नाथ! परमेश्वर! सर्वशक्ते!। आगच्छ
मे कुरु दयां प्रतिमां भजस्व पूजां गृहाण मदनुग्र-
हकाम्यया‌द्य ॥ ४ ॥ श्रीगण्डक्युद्भवसुपुण्यशि-
लातलेऽस्मिन्ख्याते कृतस्थितिरहार्निशमत्र रम्ये ।
लक्ष्मीपते! भुवनसार! सुरेन्द्रवन्द्य! पूजां गृहाण
भगवन्भव मेऽद्य तुष्टः ॥ ५ ॥ वामेऽभयं मुकुरशा-
ङ्खसुरोरुहं च शक्तिगदावरफलाधृतव्याघ्रमूर्तिः ।
लक्ष्मीसरस्वतिकरो दशपञ्चवक्त्रो भूयादभीष्ठफल-
दो नरकोद्धरो वा ॥ ६ ॥ किं भूयसा तरुणनीरद-
नीलमूर्तिः पीताम्बरः कमलपत्रविशालनेत्रः । का-

मोदकीकमलकम्बुरथाङ्गलक्ष्मा लक्ष्मीपती रतिपतिः प्रभुराविरस्तु ॥ ७ ॥ आवाहयामि मणिसन्निभमात्मबिम्बे मायापुरे हृदयपङ्कजसन्निविष्टम् । श्रद्धानदीविमलचित्तजलाभिषेकैर्भावाष्ट[1]पुष्पविधिना हरिमर्चयामि ॥ ८ ॥ एह्येहि नारायण ! दिव्यमूर्ते ! सर्वामरैरर्चितपादपद्म !। सुरासुराणां जगतामधीश ! लक्ष्मीयुतो मेऽपचितिं गृहाण ॥ ९ ॥ आत्मसंस्थमजं शुद्धं त्वामद्य परमेश्वर !। आरण्यमिव हव्याशं मूर्तावावाहयाम्यहम् ॥ १० ॥ स्वागतं देवदेवेश ! सन्निधौ भव केशव !। गृहाण मानसीं पूजां यथार्थपरिभाविताम् ॥ ११ ॥ शङ्खचक्रगदापद्मवनमालाविभूषितम् । चतुर्भुजं कृष्णवर्णं धात्रीचरणमध्यगम् ॥ देवमावाहये विष्णुं भक्त्यर्थमात्मनः सदा ॥ १२ ॥ शङ्खचक्रगदापाणिमसुराणां क्षयङ्करम् ।

---

१ अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः । सर्वभूतदयापुष्पं क्षमापुष्पं विशिष्यते । ज्ञानपुष्पं शौचपुष्पं ध्यानपुष्पं तु सप्तमम् । सत्यं चैवाष्टमं पुष्पमोभिस्तुष्यति केशवः ॥ मादलास्त्रिश्च पत्रा च गोविन्दा तुलसी तथा । बिल्वः (विना) पद्मश्च दतूरा ह्यष्टौ पुष्पाणि पूजने ॥

संसारतारणं देवं विष्णुमावाहयाम्यहम् ॥ १३ ॥
गोक्षीराभं पुण्डरीकायताक्षं छत्राब्जाद्यैर्भूषणैर्भूषिताङ्गम्। श्रीभूमिभ्यामर्चितं योगपीठे स्वस्थं वन्दे पूजितं पौरुषेण ॥ १४ ॥ ज्योतिष्मन्तं सर्वभूतान्तरस्थमोङ्काराख्यं योगिभिर्ध्यानगम्यम् । साङ्गं शक्तिसायुधं भक्तिसेव्यं सर्वाकारं विष्णुमावाहयामि ॥ १५ ॥ आत्मना चिन्तयेद्देवं नारायणमनामयम्। निर्द्वन्द्वं निर्मलं शान्तं मायातीतं च सत्परम् ॥ १६ ॥ अव्ययं परिपूर्णं च सदानन्दैकविग्रहम्। शान्तं स्वरूपममलं परंज्योतिः सनातनम् ॥ १७ ॥ अविकारमनाद्यन्तं जगच्चैतन्यकारणम्। निर्गुणं परमं ध्यायेदात्मानं परमात्परम् ॥१८॥ सहस्रशीर्षं तं देवं शङ्खचक्रगदाधरम्। लक्ष्मीसंस्थितवामाङ्गं तथाऽभयकरं प्रभुम् ॥ १९ ॥ किरीट-

कुण्डलोपेतं नानाभरणभूषितम् । भ्राजत्कौस्तुभ-
मालाढ्यं श्रीवत्साङ्कितवक्षसम् ॥ २० ॥ पीता-
म्बरधरं देवं सुरासुरनमस्कृतम् । ध्यायेदनादि-
निधनं सर्वकामफलप्रदम् ॥ २१ ॥ अविकारमजं
शुद्धं सर्वतोबाहुमीश्वरम् । निर्गुणं परमं सूक्ष्मं स-
र्वकारणकारणम् ॥ २२ ॥ अतसीपुष्पसङ्काशं पी-
तवाससमच्युतम् । प्रसन्नवदनं शान्तं सर्वदातारम-
व्ययम् ॥ २३ ॥ विकचत्पद्मपत्राक्षं सूर्यकोटिस-
मप्रभम् । सर्वालङ्कारसंयुक्तं स्वर्णयज्ञोपवीतिन-
म् ॥ २४ ॥ एवं ध्यानपरो यस्तु भक्तिमान्गतम-
त्सरः । स याति परमानन्दं परंज्योतिः सनातन-
म् ॥ २५ ॥ हृत्पद्मस्थं सर्ववेदैश्च वेद्यं योगिज्ञेयं
सत्यवाक्यं वरिष्ठम् । तेजोमूर्तिमप्रमेयं वरेण्यं
स्वच्छं वन्दे देवपूज्यं सुरेशम् ॥ २६ ॥ यज्ञं याज्यं

याजकस्य स्वरूपं सर्वं पूज्यं सर्वगं शाश्वतं च ।
ज्ञातं ज्ञेयं ज्ञनमूर्तिं पुराणं पूतात्मानं भावगम्यं
नतोस्मि ॥२७॥ भ्राजत्भास्वद्रश्मिजालान्तरस्थं वि-
श्वाधारं सर्वलोकस्य नाथम् । गुह्यं गोप्यं संस्तुतं
देववृन्दैर्वन्दे देवं पद्मपत्रायताक्षम् ॥ २८ ॥ नाना-
कारं शक्तिदं कामहेतुं तेजोमूर्तिं पद्मनाभं प्रजेश-
म् । पद्मानाथं पद्मवासं त्रिनेत्रमग्राह्यं तं नौमि वि-
ख्यातभूतिम् ॥२९॥ लक्ष्मीकान्तं वासुदेवाख्यमी-
शं सत्याकारं ऋतसत्यस्य हेतुम् । शङ्खं चक्रं पद्म-
यष्टी दधानं लोकाध्यक्षं मानसे भावयामि ॥ ३० ॥
हृत्कोटरान्तरगतं भुवनेशमाद्यमावाहयामि तरुणं
शुभभक्तियुक्त्या । देवं प्रपञ्चरहितं परमात्ममूर्तिं
तेजोनिधानमतिसुन्दरमव्ययांशुम् ॥ ३१ ॥
आवाहयाम्यहं देवं विष्णुं वै विश्वरूपिणम् । एक-

वक्त्रं चतुर्बाहुं शङ्खचक्रगदाधरम् । खगेश्वरसमारूढं सदा कमलयायुतम् । अतसीपुष्पसङ्काशं पीतवाससमच्युतम् । ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् । पीतवर्ण ! महौजस्क ! पीतस्रग्दामभूषित ! । बलिः पुष्पं चरुं चैव धूपदीपौ प्रगृह्यताम् ॥ प्र तद्विष्णुः स्तवते वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥

अथ शिवस्यावाहनम् ।

अब शिव जी के आवाहन में भी श्लोकों के अर्थ के अनुसार ध्यान करते२ शिव की प्रतिमा पर पुष्प चढावें ॥

लिङ्गेऽद्य भक्तदयया क्षणमात्रमेकं स्थानं विधाय भव ! मद्विहितां पुरारे ! । सर्वेश ! विश्वमय ! हृत्कमलादिरूढ ! पूजां गृहाण भगवन्भव मेऽद्य तुष्टः ॥ १ ॥ भूमेर्जलाच्च पवनादनलाद्धिमांशोरुष्णार्चिषो हृदयतो गगनात्समेत्य लिङ्गेऽद्य सन्मणिमये मदनुग्रहार्थं

भक्त्यैकलभ्य ! भगवन् ! कुरु सन्निधानम् ॥ २ ॥
लिङ्गेऽस्मिन्भगवन्! शम्भो ! सदा सन्निहितो भव।
गृहाणार्चामिमां देव ! कृपया परमेश्वर ॥ ३ ॥ मङ्ग-
लायतनं देवं युवानमतिसुन्दरम्। ध्याये कल्पतरो-
र्मूले समासीनं सहोमया ॥ ४ ॥ नमो महेश्वराग-
च्छ देव देव जगत्पते !। प्रसादं कुरु मे देव ! न-
मस्तुभ्यं हि शङ्कर ! ॥ ५ ॥ आवाहयामि वृषभास-
नमीश्वरं तं गौरीपतिं सकलभीतिहरं सुरेशम् ।
चर्माम्बरं दशभुजं च विभूतिहस्तं व्यालैर्विभूषित-
तनुं मखरक्षणार्थम् ॥ ६ ॥ आगच्छ मृत्युञ्जय !
चन्द्रमौले ! व्यालाजिनालंकृत ! शूलपाणे ! । स्व-
भक्तसंरक्षणकामधेनो ! प्रसीद सर्वेश्वर ! पार्वतेश !
॥७॥ आराधितो मनुष्यैस्त्वं देवैः सिद्धैर्महर्षिभिः ।
आवाहयामि भक्त्या त्वां गृहाणार्चां महेश्वर ! ॥८॥

आयाहि भगवन्! शम्भो! सर्वेश! गिरिजापते!। प्रसन्नो भव देवेश! नमस्तुभ्यं हि शंकर!॥ ६ ॥ आवाहयाम्यहं देवमीश्वरं पार्वतीपतिम्। वृषभासनमारूढं नागाभरणभूषितम्। प्रीतोऽस्तु मम दासस्य तुष्टो भूयाज्जगत्पतिः। शुक्लवर्ण! महातेजः शुक्लस्रग्दामभूषित!। गन्धपुष्पादिनैवेद्यं धूपदीपौ प्रगृह्यताम् ॥ ० ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु। यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः॥ अथ गणेशस्य।

अब गणेश जी के आवाहन में भी ध्यानपूर्वक इस की प्रतिमा पर पुष्प चढावें ॥

ध्याये गजाननं देवं तप्तकाञ्चनसन्निभम्। चतुर्भुजं महाकायं सर्वाभरणभूषितम्। दन्ताक्षमालापरशुपूर्णमोदकपात्रकम्। मोदकासक्तशुण्डाग्रमेकदन्तं विनायकम्। उमासुतं तु विघ्नेशं सर्वव्यापिनमीश्वरम्। आवाहयामि

पूजार्थमागच्छ द्विरदानन ! ॥ शैलेश्वरस्य तनयार्भक ! भक्तविघ्ननाशाय हस्तधृतदण्डकुठारपाश ! द्वारेश ! सर्वगणनायक ! पद्महस्त ! पूजां गृहाण भगवन् ! भव मेऽद्य तुष्टः ॥ आवाहयामि गजपुङ्गवमीश्वरं तं लम्बोदरं बहुभुजं जठराग्निदीप्तम् । साक्षिस्रजं परशुमोदकदन्तहस्तं भक्तार्तिनाशनकरं मखरक्षणार्थम् ॥ आवाहयाम्यहं देवं गणेशं सुरपूजितम् । सदैव विघ्नहर्तारं सर्वकामफलप्रदम् । रक्तवर्ण ! महौजस्क ! रक्तस्रग्दामभूषित ! । बलिः पुष्पं चरुं चैव धूपदीपौ प्रगृह्यताम् ॥ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥

अथ सूर्यस्य ।

सूर्य देवताके आवाहन में भी ध्यानपूर्वक इस की प्रतिमा पर पुष्प चढावें ।

आवाहयाम्यहं देवं भानुं सर्व-

जगद्गुरुम् । अरुणः सारथिर्यस्य सप्ताश्वरथवाहनम् ॥ एहि सूर्य ! सहस्रांशो ! तेजोराशे ! जगत्पते !। अनुकम्पस्व मां भक्त्या पीडां हर दिवाकर ! ॥ धवलाम्भोरुहारूढं दाडिमीकुसुमप्रभम् । स्फुरद्रत्नमहातेजोधृतमण्डलमध्यगम् । अंसासक्तस्फुटश्वेतसनालाब्जकरद्वयम् । एकास्यं चिन्तये भानुं द्विभुजं रक्तवाससम् ॥ त्रैलोक्यं भूषितं येन भुवनानि चतुर्दश । अव्यक्तं व्यक्तिमापन्नं रविमावाहयाम्यहम् ॥ ब्रह्माण्डगेह ! परदीपक ! शम्भुमूर्ते ! तेजोनिधान ! खचरेश्वर ! पूर्वदेव !। पञ्चोपचारविधिना विहितां मयाद्य पूजां गृहाण भगवन् ! भव मेऽद्य तुष्टः ॥ आवाहयामि दिननाथमहं वहन्तं दत्तेऽक्षसूत्रमथ धूम्रपदं ध्वजं च । सप्ताश्वगं भुवनविस्तृतरश्मिपुञ्जं व्यक्तं त्रिनेत्रम[2]रुणां मख-

१ स्फुरत्तेजः २ शरणं

रक्षणार्थम् ॥ चित्रं देवानामुदगादनीकं चक्षुर्मित्र-
स्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षँ
सूर्य आत्मा जगतस्तस्थुषश्च ॥ अथदेव्याः ।

अब देवी के आवाहन में भी श्लोकों के अर्थ के अनुसार ध्यान करते२ देवी की प्रतिमा पर पुष्प चढावें ॥

आवाहयाम्यहं
दुर्गां शङ्खचापशरान्विताम् । त्रिशूलहस्तां वरदां
त्रिनेत्रां चारुहासिनीम् ॥ एह्येहि दुर्गे! वरदे! भजस्व
प्रतिमां सदा । अनुकम्पस्व मां भक्त्या कृपां कुरु
महेश्वरि! ॥ श्रीशारदे! सुरवरे! त्रिपुरे! सुरेशि!
दुर्गे! भवानि! खलु वैखरि! विश्वमातः!। शर्वा-
र्द्धदेहनिलये! परिवारयुक्ते! पूजां गृहाण सुभगे!
भव मेऽद्य तुष्टा ॥ श्रीशैलराजतनये! परमार्तिहर्त्रि!
पापौघनाशिनि! सरस्वति! देवि! पूज्ये!। शर्वा-
णि! सुम्भमथने! कृतलोकरक्षे! पूजां गृहाण वर-
दे! भव मेऽद्य तुष्टा ॥ मातर्भवानि! सुरवन्दितपा-

---

१ त्रुते

दपद्मे ! श्रीशैलराजतनये ! सुभगे ! महेशि !। रुद्राणि ! सर्वगणनायकवेदमातः ! पूजां गृहाण वरदे ! भव मेऽद्य तुष्टा ॥ देवीमावाहयिष्यामि पार्वतीं वरदामुमाम्। हरस्य दयितां भार्यां चार्वङ्गीं भूतिवर्द्धिनीम् ॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥

गरुडका आवाहन चलत्येकेन पादेन स्थावरे जंगमे तथा। नागानां त्रासदं नित्यं तार्क्ष्यमावाहयाम्यहम् ॥ आवाहयाम्यहं तार्क्ष्यं स्वर्णपक्षैर्विभूषितम्। श्रीविष्णुवाहनं रम्यं खगेशं पन्नगाशनम् ॥

घण्टाका आवाहन एह्येहि सर्वदेवेशि घण्ठायां सन्निधिं कुरु । सर्वसिद्ध्युपकारार्थं ज्ञानमुद्रे नमोऽस्तु ते ॥ देवदूतीं महारावां भूतप्रेतविनाशिनीम् । देवानां प्रीतिदां नित्यं घण्ठामावाहयाम्यहम् ॥

शंखका आवाहन गर्भा येऽसुरनारीणां विनश्यन्ति सहस्रधा । तव नादेन पाताले पाञ्चजन्य नमोऽस्तु ते ॥ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे। पूजया पाञ्चजन्याशु देहि मेऽभिमतं फलम्। तव नादेन जीमूता विनश्यन्ति सहस्रशः। शशांकायतदीप्तांग पाञ्चजन्य नमोऽस्तु ते ॥

फिर विष्णुप्रतिमा पर तीन बार पुष्प चढावें।

भगवन् ! पुण्डरीकाक्ष ! भक्तानुग्रह-कारक !। अस्मद्दयानुरोधेन सन्निधानं कुरु प्रभो ! ३

यहां पर अञ्जलि में पुष्प लेकर पहिले गायत्री मन्त्र को तीन वार पढकर इस के अर्थ के अनुसार ज्योतिरूप परमात्म स्वरूप का ध्यान अपने हृदय कमल पर धारण कर पाद्य आदि दानपूर्वक सब पूजनके वस्तु देवता के अर्पण करें । तब नाकके मार्ग से पुष्पाञ्जलि पर सांस डालने से उस स्वरूपको हृदय में से इस पर निकालें । फिर प्रतिमापर अञ्जलि के पुष्प रखकर इस पर देवता के ठहरने की भावना करके बाह्य पूजा आरम्भ करें ॥

ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ ३ ॥

इत्यावाह्य तु गायत्रीं त्रिस्समुच्चार्य तत्त्ववित् । मनसा चिन्तितैर्द्रव्यैर्देवमात्मानि पूजयेत् । तेजोरूपं ततः क्षिप्त्वा प्रतिमायां पुनर्यजेत् ॥

दोनों कन्धों पर से जवों को फेंक कर प्राणायाम करें ।

यवान्विकीर्य प्राणायामं कुर्यात् ॥

धारापात्र में जल डाल कर नमस्कार पूर्वक जल से प्रार्थना करें ।

पाद्यार्थमुदकं नमः । शन्नो देवी-रभिष्टय आपो भवन्तु पीतये । शँ योरभिस्रवन्तु नः ॥

धान के फूल-केपर-सर्वौषधि-दाभ के अंकुर- और जल यह पांच वस्तु इकट्ठे पाद्य कहलाता है।

लाजाश्च कुंकुमं चैव सर्वौषधिसमन्वितम् । दर्भांकुरं जलं चैव पञ्चांगं पाद्यलक्षणम् ॥

नमस्कार धरकर पञ्चायतन से पाद्य देने की आज्ञा मांगें ।

भगवन्तः! पाद्यं पाद्यम् ॥

नीचे के मन्त्र पढते पाद्य की जलधारा देदेवें। एतावानस्य, हिरण्यवर्णा इति पाद्यम्।

एतावानस्य महिमातो ज्यायाँश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शँ स्योना भवन्तु ॥ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । या अग्निं गर्भं० ॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम्। या अग्निं गर्भं ० ॥ शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे। मधुश्च्युतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु ॥ भगवते मासपतये नारायणाय० । भगवते वासुदेवाय० । भगवते भवाय देवाय ० । भगवते विनायकाय ० । भगवते

ह्रां ह्रीं सः सूर्याय०। भगवत्यै अमायै०। विष्णुपञ्चायतनदेवताभ्यः पाद्यं नमः ॥ पाद्यसे बाकी बचा हुआ जल निर्माल्यपात्र में छोडें। पाद्यशेषं निवारयेत् ॥ फिर धारापात्र में जल डाल कर नमस्कारपूर्वक इससे प्रार्थना करें। पुनः। शन्नो देवी० ॥

जल-दूध-दाभ के अंकुर-घी-दही-चावल-जव और सर्षप यह आठ वस्तु इकट्ठे अर्घ्य कहलाता है।

आपः क्षीरं कुशाग्राणि घृतं च दधि तण्डुलाः। यवाः सिद्धार्थकाश्चैवमर्घ्यमष्टांगमुच्यते ॥

नमस्कार धरकर पञ्चायतन से अर्घ्य देने की आज्ञा लेवें। भगवन्तोऽर्घ्यमर्घ्यम्।

नीचे के मन्त्र पढते अर्घ्य की जलधारा देदेवें।

त्रिपादूर्ध्व आपोहिष्ठेत्यर्घ्यम् ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः। ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः ॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः ॥ भगवन् मासपते नारायण। ( मार्गशीर्षे

रुक्मिणीसहित कृष्ण श्रीसहित केशव। पौषे प्रिया-
सहितानन्त वागीश्वरीसहित नारायण । माघे
प्रीतिसहिताच्युत कान्तासहित माधव । फाल्गुणे
शक्तिसहित चक्रिन् क्रियासहित गोविन्द । चैत्रे
सिद्धिसहित वैकुण्ठ शक्तिसहित विष्णो । वैशाखे
श्रीसहित जनार्दन विभूतिसहित मधुसूदन। ज्यैष्ठे
महिमासहित उपेन्द्र इच्छासहित त्रिविक्रम । आ-
षाढे लक्ष्मीसहित यज्ञपुरुष प्रीतिसहित वामन ।
श्रावणे कान्तिसहित वासुदेव रतिसहित श्रीधर ।
भाद्रपदे प्राप्तिसहित हरे मायासहित हृषीकेश ।
आश्वयुजे प्राकाम्यासहित योगेश्वर धीसहित
पद्मनाभ । कार्तिके लघिमासहित पुण्डरीकाक्ष
महिमासहित दामोदर । मलिंलुचे शक्तिसहित
योगीश सत्यभामासहित नरकारे । निष्कलास-

हित महामार्तण्डनाथ) ॥ भगवन् वासुदेव सङ्क-
र्षण प्रद्युम्न अनिरुद्ध सत्य पुरुष अच्युत माधव
गोविन्द सहस्रनामन् विष्णो लक्ष्मीसहित नारा-
यण ॥ भगवन् भव देव शर्व देव रुद्र देव पशुपते
देव उग्र देव भीम देव ईशान देव ईश्वर देव
महादेव पार्वतीसहित परमेश्वर ॥ भगवन् विनायक
एकदन्त कृष्णपिंगल गजानन लम्बोदर भालच-
न्द्र हेरम्भ आखुरथ विघ्नेश विघ्नभर्त्त[1] वल्लभास-
हित महागणेश ॥ भगवन् ह्रां ह्रीं सः सूर्य सप्ताश्व
अनश्व एकाश्व नीलाश्व प्रत्यक्षदेव तेजोरूप पर-
मार्थसार भास्कर प्रभासहित आदित्य ॥ भगवति
अमे कामे चार्वंगि टंकधारिणि तारे पार्वति यक्षिणि
श्रीशारिकाभगवति श्रीशारदाभगवति श्रीमहारा-
ज्ञीभगवति श्रीज्वालाभगवति भीडाभगवति वैखरी-

१ भक्ष्य

गवति वितस्ताभगवति गंगाभगवति यमुनाभगवति सिद्धलक्ष्मि महालक्ष्मि महात्रिपुरसुन्दरि सहस्रनाम्नि देवि भवानि ॥ श्रीविष्णुपञ्चायतनदेवताः! इदं वोऽर्घ्यं नमः ।

'तस्माद्विराट्–और शन्न आप' इन मन्त्रोंसे शुद्ध जल आचमनके लिए देवें ।

तस्माद्विराट् शन्न आप इत्याचमनीयम् ॥

तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥

शन्न आपो धन्वन्याः शन्नः सन्त्वनूप्याः । शन्नः समुद्रिया आपः शमु नः सन्तु कूप्याः ॥ भगवते मासपतये नारायणाय० ॥ भगवते वासुदेवाय० । भगवते भवाय देवाय० । भगवते विनायकाय० । भगवते ह्रां ह्रीं सः सूर्याय० भगवत्यै अमायै० । श्रीविष्णुपञ्चायतनदेवताभ्य आचमनीयं नमः ॥

अक्षतसमेत जलका मन्त्रस्नान 'यत्पुरुषेण और इदमाप' इन मन्त्रोंसे देवें ।

यत्पुरुषेण इदमाप इति मन्त्रस्नानम् ।

यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ इदमापः प्रवहत यत्किंचिद् दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ भगवते मासपतये नाराय-णाय० । भगवते वासुदेवाय० । भगवते भवाय देवाय० । भगवते विनायकाय० । भगवते ह्रां ह्रीं सः सूर्याय० । भगवत्यै अम्बायै० । श्रीविष्णुपञ्चायतन देवताभ्यो मन्त्रस्नानं नमः ॥

फिर एकविंशति स्नान देदेवें । तत एकविंशतिस्नानम् ॥

पयो दधि-घृतं-क्षौद्रं-लाजाः-सिद्धार्थकास्तिलाः। यव व्रीहि-कुशा-दूर्वा-मृद्-भस्म-फल-शर्कराः ॥ पञ्चामृतं पञ्चगव्यं कर्पूरौषधयस्तथा । एकविंशति-स्नानानि गन्धाद्भिः कुसुमैरपि ॥ नीचेके मन्त्रसे जलका स्नान देना चाहिए [जो एकविंशतिस्नानसे पृथक् ' वरुणस्नान ' नामक है ]

शुनः शेपस्य त्रिष्टुप् वरुणः ॥ उदुत्तमं वरुण पाशमस्मदवा-

धर्मं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ इति वरुणस्नानादनन्तरमेकविंशति स्नानानि दद्यात्।

प्रत्येक मन्त्रसे मन्त्रके साथ लिखेहुए द्रव्य और जलका एकविंशति स्नान देवें।

दूधसे पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ १ ॥ दहीसे। नारायणस्यानुष्टुप्।

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत् प्र ण आयूँषि तारिषत् ॥ २ ॥

घीसे। भारद्वाजस्य ब्रह्मणः त्रिष्टुप् घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा। द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ ३ ॥

शहदसे राहूगणस्य ब्रह्मणः तिस्रो गायत्र्यः। मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः ॥ मधु नक्तमुतोषसो मधुमत्पार्थिवँ रजः। मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँ ॥

अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः ॥ ४ ॥ धान्यके फूलोंसे तदस्य रूपममृतँ शचीभिस्तिस्रो दधुर्देवताः सँरराणाः। लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य माँसमभवन्न लाजाः ॥ ५ ॥ सर्षपोंसे रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवः सरिषः पातु नक्तम् ॥ ६ ॥ तिलोंसे[1] ब्रह्मणोऽनुष्टुप् तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पितृँल्लोकान्प्रीण आयाहि नमः स्वधा ॥ ७ ॥ जवोंसे। मारुतस्य घोराणां यजुः। यवोसि यवयास्मद्द्वेषं यावयारातिम् । पितृषदनन्त्वा लोकमास्तृणामि ॥ ८ ॥ धान्योंसे देवानां यजुः ब्रीहयः। धान्यमसि धिनुहि देवान्धेनोहि यज्ञन्धिनुहि । यज्ञपतिन्धिनुहि मां यज्ञन्यम् ॥ ९ ॥ कुशासे । सावित्राणि सावित्रस्य यजुः कुशाः। देवस्य त्वा सवितुः

1 दिवा

प्रसवेऽश्विनोर्बाहुभ्यां । पूष्णो हस्ताभ्याम् ॥ १० ॥
दूर्वासे । प्रजापतेरनुष्टुप् दूर्वा काण्डात्काण्डात्प्ररोहन्ती परु-
षः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन
च ॥ ११ ॥ मिट्टीसे । गृत्समदस्य भार्गवस्यानुष्टुप् आक्रम्य
वाजिन्पृथिवीमग्निमिच्छ रुचा त्वम् । भूम्या वृत्त्वाय[1]
नो ब्रूहि यतः खनेम तं[2] वयम् ॥ १२ ॥ भस्मसे । कश्यपस्या-
नुष्टुप् प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । सँ-
सृज्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासदः ॥ १३ ॥
फलोंसे । अथर्वणस्य भिषज अनुष्टुप् ओषधयः । याः फलिनीर्या अ-
फला अकोशाः[3] कोशिनीश्च याः । बृहस्पतिप्रसूतास्ता
नो मुञ्चन्त्वँहसः ॥ १४ ॥ शकरसे । शर्कराभिरवकामवका-
भिः शर्करामत्सादेन जिह्वामवक्रन्देन तालं सरस्वती
जिह्वाग्रेण ॥ १५ ॥ पयो दधि घृत क्षौद्र शर्करा मिश्रीकृत्य ॥
पञ्चामृत (जो दूध, दही, घी, शहद, और शकर मिलाकर बनता है) से पञ्च व्यष्टीरनु पञ्च दोहा

---

१ यत्वाय नु २ ते ३ अपुष्पाः याश्च पुष्पिणीः

गां पञ्चनाम्नीमृतवोनु पञ्च । पञ्च दिशः पञ्चदशेन क्लृप्ताः[1] समानमूर्ध्नीरभि लोकमेकम् ॥ १६ ॥

गोमूत्रं गोमयं क्षीरं दधिः सर्पिः कुशोदकम् । इति मिश्रीकृत्य ॥

पञ्चगव्य–[जो गऊ का–मूत्र-गोबर-दूध-दही-और घी और कुशा और जलको मिलाकर बनाया जाताहै] से । समुद्रादूर्मिर्मधुमाँ२ ॥ उदारदुपाँशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ १७ ॥

कपूरसे । वामदेव भारद्वाजयोस्त्रिष्टुप् त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ १८ ॥ सर्वौषधिसे । अथर्वणस्य भिषजोऽनुष्टुप् ओषधयः । या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहँ शतं धामानि सप्त च ॥ १८ ॥

चन्दनआदि सुगन्ध द्रव्यसे । भार्गवस्यानुष्टुप् लक्ष्मीः । गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ १९ ॥ फूलोंसे । अनुष्टुप् ओषधयः ।

[1] क्लृप्ता एकमू-

पुष्पवतीः प्रसुमतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ २१॥ भगवते मासपतये नारायणाय । भगवते वासुदेवाय० । भगवते भवाय देवाय० । भगवते विनायकाय० । भगवते ह्रां ह्रीं सः सूर्याय० । भगवत्यै अमायै० । श्रीविष्णुपञ्चायतनदेवताभ्य एकविंशतिस्नानं नमः ।

ततः विष्णोः षोडशस्नानानि ॥

अम्भुना पयसा दध्ना घृतेन मधुना यवैः शर्करा-सर्षप-तिलैः । तथा चामीकरेण वै कर्पूर-कुङ्कुमाभ्यां च लाजा-ऽक्षोटैः सपुष्पकैः ॥ सर्वौषध्या ततः पश्चाद्विष्णोः स्नानानि षोडश । दद्यात्षोडशस्नानानि षोडशर्चेन वै क्रमात् ॥ वसोः पवित्रमन्त्रेण शतधारोदकेन च सहस्रधारोदकेन च। शुद्धजलसे शतधार और सहस्रधार स्नान देवें । वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम् ॥

अयक्ष्मा वः प्रजया सँसृजामि रायस्पोषेण बहुला भवन्तीः ॥ वासुदेवादिभ्यः श्रीविष्णुपञ्चायतनदेवताभ्यः शतधारोदकं नमः सहस्रधारोदकं नमः ॥

जल–दूध–दही-घी-शहद–जव-शकर–सर्षप-तिल-सोना-कपूर-केसर-धान्दके फूल-अखरोटकी गिरीयाँ-फूल-और सर्वौषधि इन सबको मिलाकर शब्द न देनेवाले शंखसे विष्णुको १६ मन्त्रोंसे षोडशस्नान देवें।

आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता। विश्वात्मा पुरुषः साक्षाद्दृषिर्नारायणः स्मृतः ॥ पुरुषमेधः पुरुषस्य नारायणस्यार्षम् ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। सभूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्। उतामृतत्वस्येशानो यदन्नेनाति रोहति ॥ २ ॥ एतावानस्य महिमातो ज्यायाँश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः। ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥ ४ ॥ तस्माद्विराळजायत वि-

राजो अधि पूरुषः । स जातो अत्यरिच्यत पश्चा-
द्भूमिमथो पुरः ॥ ५ ॥ यत्पुरुषेण हविषा देवा
यज्ञमतन्वत । वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः
शरद्धविः ॥ ६ ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जात-
मग्रतः । तेन देवा अयजन्त साध्या ऋषयश्च
ये ॥ ७ ॥ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥ ८ ॥
तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दां-
सि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥ त-
स्मादश्वा अजायन्त ये के चोभयादतः । गावो ह
जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ १० ॥ य-
त्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्य
कौ बाहू का ऊरू पादा उच्येते ॥ ११ ॥ ब्राह्म-
णोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य

यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ १२ ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥ यहां पर इन्ही १६ द्रव्यों समेत जलसे तथा शङ्खसे लक्ष्मीसूक्त के 'हिरण्यवर्णामेकोना' से आरम्भ करके 'हिरण्यवर्णां हरिणीम्' इत्यादि १६ मन्त्रों से विष्णुप्रतिमा परही विष्णुशक्ति लक्ष्मी को भी इसका ध्यानकरके स्नान देनाचाहिए। तद्विष्णोः परमं ० भगवते वासुदेवाय० षोडशस्नानं परिकल्पयामि नमः ॥

ततः शिवाय पञ्चदश स्नानानि दद्यात् ॥ प्रत्येक मन्त्रसे मन्त्रके साथलिखे द्रव्य और जल का पञ्चदश स्नान शिवजी को देवें ।

पानीयान्तरितैः पयो-दधि-घृतैः क्षौद्रेक्षुभिः सौषधैः ।

व्रीह्यद्भिः कुसुमोदकैः फलजलैः सिद्धार्थ-लाजोदकैः । गन्धाद्भिः शुभहेम-रत्नसलिलैरित्थं सदा ह्युत्तमैः । दद्यात्पञ्चदशाम्बुना सह महास्नानानि शम्भोः क्रमात् ॥ जलसे उदुत्तमं० दूधसे पयः पृथिव्यां ० दहीसे दधिक्राव्णो ० घीसे घृतवती भुव० शहदसे मधु वाता ० गन्नोंसे स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतुनाम्नी । स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमाँ अदाभ्यः ॥ सर्वौषधिसे या ओषधयः० धान्यसे धान्यमसि० फूलोंसे पुष्पवतीः० फलोंसे याः फलिनी० सर्षपोंसे रक्षोहणं० धान्यके फूलोंसे तदस्य रूपं० चन्दनादिसुगन्धद्रव्यसे गन्धद्वारां० सोनेसे हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ रत्नोंसे ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ समुद्रादर्णवादधिसंवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्या चन्द्रमसौ धाता यथापूर्व-

मकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥

ततो रुद्रमन्त्रैः शताध्यायमन्त्रैः चमकानुवाकमन्त्रैश्च शिवस्य स्नानम् ।

फिरभी 'रुद्रमन्त्रों' 'शताध्यायमन्त्रों' और 'चमकानुवाकमन्त्रों' से अथवा अवसर न होने केवल नीचेके मन्त्रों ही से उपरोक्त १५ द्रव्यों समेत जलका स्नान शिवजी को देना चाहिए।

असङ्ख्याताः सहस्राणि ये रुद्रा अधि भूम्याम् । तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ योऽस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । तेषाँ स० ॥ ये नीलग्रीवाः शितिकण्ठा दिवँ रुद्रा उपाश्रिताः । तेषाँ स० ॥ ये नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः । तेषाँ स० ॥ ये वनेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः । तेषाँ स० ॥ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । तेषाँ स० ॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः । तेषाँ स० ॥ ये पथीनां पथिरक्षय ऐळमृदा यव्युधः । तेषाँ स० ॥ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः । तेषाँ स० ॥ य एतावन्तो वा भूयाँसो वा दिशो रुद्रा वितस्थिरे । तेषाँ स० ॥

नमो अस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नो मृळयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

नमो अस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नो मृळयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

नमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नो मृळयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥ ओं भूर्भुवस्स्वः स्वाहा । क्षुच्च शुक्चोष्णाचोग्रा च भीमा च राष्ट्रा च बीभत्सा च वैशन्ता च शार्दूलाका चानि-

राका चाभीवाचानाहुतिश्च निर्ऋतिरेतास्ते अग्नेव-
र्तिमती स्तन्वस्ताभिस्तङ्गच्छ योऽस्मान्द्वेष्टि यं च वयं
द्विष्मस्तमर्पय ॥ यो रुद्रो अग्नौ यो अप्सु य ओ-
षधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना
विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ भगवते
भवाय देवाय० पञ्चदश स्नानं परिकल्पयामि नमः ॥

ततो गणेशाय चतुर्दश स्नानानि दद्यात् ॥

प्रत्येकमन्त्र से मन्त्र के साथलिखे द्रव्यों का चतुर्दश स्नान गणेश जी को देवें ।

पयो-लाजा-पञ्चगव्यैर्गन्ध-कर्पूर-सर्षपैः । तिलैः-क्षी-
रैर्मधुभिश्च हेम्ना शुद्धेन च तथा ॥ रक्तपुष्पौषधिभि-
श्च फलैरिक्षुभिरेव च । गणानान्त्वेति सूक्तेन गणेश-
स्नानमाचरेत् ॥ जलसे उदुत्तमं० धान्यके फूलोंसे तदस्य रू-
प० पञ्चगव्यसे समुद्रादूर्मि० चन्दन आदिसुगन्धद्रव्योंसे गन्धद्वारां०
कपूरसे त्र्युम्बकं यजा० सर्षपोंसे रक्षोहणं० तिलोंसे तिलोऽ-
सि० दूधसे पयः पृथिव्यां० शहदसे मधुवाता० सोनेसे हिर-

ण्यवर्णां० लाजफूलोंसे पुष्पवतीः० सर्वौषधिसे या ओषधयः० फलोंसे या फलिनी० गन्नोंसे स्वादुः पवस्व०। फिर उपरोक्त सब द्रव्यों समेत वा नीचेलिखे द्रव्यों समेत जलका स्नान 'गणानान्त्वा' सूक्तसे भी गणेश जीको देदेवें।

[चन्दनागुरु-कर्पूर-कस्तूरी-गौरसर्षपाः। मृग-जाती च गुग्गुलं शैलेयं रजनीद्वयम् ॥ अश्वत्थपल्लवैश्चैव ह्यन्यैः सुगन्धिभिस्तथा। एतैश्चतुर्दशस्नानं विघ्नेशस्य प्रकल्पयेत् ॥ ]

लालचन्दन-अगर-कपूर-कस्तूरी-लालसरसों-नाफ-चमेली-गूगर-छड-हलदी-दारुहलदी- अश्वत्थकेपत्ते-और२ सुगन्धद्रव्य।

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्॥ देवाश्चित्ते असुर्य प्रचेतसो बृहस्पते यज्ञियं भागमानशुः। उस्रा इव सूर्यो ज्योतिषा महो विश्वेषामिज्जनिता ब्रह्मणामसि ॥ आ विबाध्या परिरापस्तमांसि च ज्योतिष्मन्तं रथमृतस्य तिष्ठसि। बृहस्पते भीममभित्रदम्भनं रक्षोहणं गोत्रभिदं स्वर्विदम्॥ सुनीतिभिर्नयासि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवत्। ब्रह्मद्विषस्तपनो म-

न्युमीरासि बृहस्पते महितत्तेमहित्वनम् ॥ न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः । विश्वा इदस्माद्ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते ॥ त्वं नो गोपाः पथिकृद्विचक्षणस्तव व्रताय मतिभिर्जरामहे । बृहस्पते यो नो अभि ह्वरो दधे स्वा तं मर्मर्तु दुच्छुना हरस्वती ॥ उत वा यो नो मर्चयादनागसोऽरातीवा मर्तः सानुको वृकः । बृहस्पते अप तं वर्तया पथः सुगं नो अस्यै देववीतये कृधि ॥ त्रातारं त्वा तनूनां हवामहेऽवस्पर्तरधिवक्तारमस्मयुम् । बृहस्पते देवनिदो नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशन् ॥ त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि । या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ॥ त्वया वयमुत्तमं धीमहे वयो बृहस्पते पप्रिणा स-

सखिना युजा । मा नो दुःशंसो अभिदिप्सुरीशत प्र सुशंसा मतिभिस्तारिषीमहि ॥ अनानुदो वृषभो जग्मिराहवं निष्टप्ता शत्रुं पृतनासु सासहिः । असि सत्य ऋणया ब्रह्मणस्पत उग्रस्य चिद्दमिता वीळुहर्षिणः ॥ अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति । बृहस्पते मा प्रणक्तस्य नो वधो नि कर्म मन्युं दुरेवस्य शर्धतः ॥ भरेषु हव्यो नमसोपसद्यो गन्ता वाजेषु सनिता धनन्धनम् । विश्वा इदर्यो अभिदिप्स्वो मृधो बृहस्पतिर्वि ववर्हा रथाँ इव ॥ तेजिष्ठया तपनी रक्षसस्तप ये त्वा निदे दधिरे दृष्टवीर्यम् । आविस्तत्कृष्व यदसत्त उक्थ्यं बृहस्पते वि परिरापो अर्दय ॥ भगवते विनायकाय ८ चतुर्दशस्नानं परिकल्पयामि नमः ॥

ततः सूर्यस्य त्रयोदशस्नानानि ॥

अधो लिखित मन्त्रों से और उदुत्यमित्यादि सूक्तसे मन्त्रों के साथ लिखे द्रव्यों समेत जल का त्रयोदश स्नान सूर्यदेवताको देदेवें ।

पयः क्षीरं दधि सर्पिरिक्षु-तिल-मधु-यवाः । लाजा-ऽमृतं पञ्चगव्यं कर्पूरौषधयस्तथा ॥ त्रयोदश रवेर्द्रव्याण्युक्तानि स्नानकर्मणि । उदुत्यमिति सूक्तेन स्नानं सूर्यस्य कीर्तितम् ॥ शुद्ध जलसे । उदुत्तमं० दूधसे। पयः पृथिव्यां० दहीसे। दधिक्राव्णो० घीसे। घृतवती० गन्नोंसे। स्वादुपव० तिलोंसे। तिलोसि० शहदसे मधु वाता० जवोंसे यवोसि० धान्यके फूलोंसे तदस्य रूपं० पञ्चामृतसे पञ्च व्यष्टीः० पञ्चगव्यसे । समुद्रादूर्मिः ० कपूरसे। त्र्यम्बकं० सर्वौषधिसे । या ओषधयः० सबद्रव्यों समेत जलसे। उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम् ॥ अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥ अदृश्रन्नस्य केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा ॥ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ॥ प्रत्यङ्दे-

वानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्याङ्विश्वं स्व-
र्दृशे ॥ येना पावक चक्षसा भूरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥ विद्यामेषि रजस्पृथ्वहा मि-
मानो अक्तुभिः । पश्यञ्जन्मानि सूर्य ॥ सप्त
त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं
विचक्षण ॥ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य
नप्त्यः । ताभिर्याति स्वयुक्तिभिः ॥ उद्वयं तम-
सस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सू-
र्यमगन्म ज्योतिरुत्तमम् ॥ उद्यन्नद्य मित्रमह आ-
रोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च
नाशय ॥ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।
अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥ उद-
गादयमादित्यो विश्वेन सहसा सह । द्विषन्तं मह्यं
रन्धयन्मो अहं द्विषते रधम् ॥ ह्रां ह्रीं सः सूर्याय ८

त्रयोदश स्नानं परिकल्पयामि नमः ॥

ततो देव्यै अष्टौ स्नानानि दद्यात्

क्षीरं घृतं शर्करं च पञ्चामृतं तथैव च । क्षौद्रं द्राक्षा यवा लाजा देवीस्नाने प्रकीर्तिताः ॥ अस्यवामेति मन्त्रैस्तु देवीस्नानं प्रकल्पितम् । नीचेके ८ मन्त्रों से और अस्य-वाम नामक देवी मन्त्रों से अथवा अवसराभाव में 'अहमष्टौवागम्बिनी' इत्यादि एक फट्ठिका से भी प्रत्येक मन्त्रके साथ लिखे द्रव्यों समेत जल का अष्टौस्नान देवी को देदेवें

दूध से। पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥

घीसे घृतवती० शक्करसे शर्कराभिः० पञ्चामृतसे पञ्चव्यष्टीः०

शहदसे मधु वाता० दाखसे याः फलिनीर्या अफला०

जवोंसे यवोऽसि ० धान्यके फूलोंसे तदस्यरूपं० भगवत्यै अमायै० ८ अष्टौस्नानं परिकल्पयामि नमः ॥

शंखस्य स्नानम् शंख का स्नान । अग्निर्ऋषिः पवमानः पांचजन्यः पुरोहितः । तमीमहे महागयम् ॥ * शङ्खाय

पाञ्चजन्याय स्नानं नमः । घण्टायाः स्नानम् । घण्ठा का स्नान

कया नश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता ॥ देवदूत्यै घण्ठाभगवत्यै स्नानं नमः । ततो देवर्षिपितृतर्पणम् ॥ अब भद्रपीठपर देवता ऋषि और पितरों का तर्पण कुशाके विष्टर वाले सामान्य धारापात्र वा उडम्बर वा गेण्डा के पात्रसे दही अक्षत घी शहद समेत जल से करें ।

(ततो दध्यक्षततिलैरित्थं मध्वाज्यमिश्रितैः । तर्पयेदुदकैर्देवानृषीन्पितॄंश्च तर्पयेत् ॥ ) प्रथम देवताओंका गृत्समदस्य आवाहन करें ।

गायत्री । विश्वेदेवास आगत शृणुताम इमं हवम् । इदं बर्हिर्निषीदत ॥ तर्पण करें । ब्रह्मा तृप्यताम् विष्णुस्तृ० रुद्रः तृ० प्रजापतिस्तृ० देवास्तृप्यन्ताम् छन्दांसि तृ० वेदाः तृ० ऋषयस्तृ० तपोधनास्तृ० आचार्यास्तृ० गन्धर्वास्तृ० इतराचार्यास्तृ० संवत्सरास्सावयवास्तृ० देव्यस्तृ० अप्सरसस्तृ० देवानुगास्तृ० नागास्तृ० सागरास्तृ० पर्वतास्तृ० सरितस्तृ० मनुष्यास्तृ०

---

❀ शंखमध्ये स्थित तोयं भ्रामितं केशवोपरि । अंगलग्नं मनुष्याणां ब्रह्महत्यादिकं दहेत् ॥ शंखादकं हरेर्भक्त्या निर्माल्यं पादयोर्जलम् । चन्दनं धूपशेषश्च ब्रह्महत्यापहारकाः ॥ पाद्मे—देवतायतने राजन्कुर्वञ्छंखरवं नरः । सर्वपापविनिर्मुक्तो ब्रह्मणा सह मोदते । अगम्यगमनाद्यैश्च विमुक्तः सर्वपातकैः । अन्ते विष्णुपुरं गत्वा विष्णुना सह मोदते ॥

यक्षास्तृ० रक्षांसि तृ० पिशाचास्तृ ० सुपर्णास्तृ० भूतानि तृ० पशवस्तृ० ओषधयस्तृ०वनस्पतयस्तृ० भूतग्रामश्चतुर्विधास्तृ०असुरास्तृ०क्रूरास्तृ०सर्पास्तृ० जम्बुकास्तृ०तरवः तृ०खगास्तृ०विद्याधरास्तृ ०जला-धाराः तृ०निराधारास्तृ०पापधर्मरतास्तृ०सर्वेग्रहाः तृ-प्यन्ताम् यमस्तृप्यतां धर्मराजस्तृ०मृत्युः तृ०अन्तकः तृ०वैवस्वतः तृ०कालः तृ०सर्वप्राणहरः तृ०औडम्भरः तृ नीलः तृ०दध्नः तृ०परमेष्ठीतृ०वृकोदरः तृ०भीमः तृ० चि-त्रः तृ ०चित्रगुप्तस्तृ०पाशहस्तः कृतान्तस्तृप्यताम् ॥

कंठोपवीती । गर्दन और दो अंगूठों में यज्ञोपवीत रखकर ऋषियों का तर्पण करें और 'तृप्यतां' शब्द दो २ बार बोलें　एकैकमञ्जलिं देवा द्वौद्वौ तु सनकादयः । अर्हन्ति पितरस्त्रीन्स्त्री-न्स्त्रियोऽप्येकैकमञ्जलिम् ॥ आवाहन । अग्निर्ऋषिः पव-मानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥

तर्पण । सनकः तृप्यताम् २सनन्दनः तृ० २सनातनः तृ० २

सनत्कुमारःतृ०२कपिलःतृ०२आसुरिःतृ०२वोढातृ०२ पंचशिखः तृ० २ मरीचिः तृ०२ अत्रिः तृ०२ अंगिराः तृ०२ पुलस्त्यः तृ०२ पुलहः तृ० २ क्रतुः तृ०२ प्रचेताः तृ०२ भृगुः तृ०२ वसिष्ठः तृ०२ नारदः तृप्यताम् २। ततः प्राचीनावीती। पितरों के तर्पणमें गर्दन और बाईं भुजामें यज्ञोपवीत रखें और 'तृप्यतां' शब्दका उच्चारण तीन वार करें।

आवाहन उशन्तस्त्वा हवामह उशन्तः समिधीमहि। उशन्नुशत आ वह पितॄन्हविषे अत्तवे॥ तर्पण

ओं कव्यवाडनलः स्वधा नमः तृप्यताम् ३। सोमः स्व०३ अर्यमा स्व०३ यमः स्व०३ अग्निष्वात्ताः स्वधा नमः तृप्यन्ताम् ३ बर्हिषदः स्व०३ हविष्मन्तः स्व०३ सोमपाः स्व०३ सुकालिनः स्व०३ आज्यपाः स्व०३ वसवः स्व०३ रुद्राः स्व०३ आदित्याः स्वधा नमः तृप्यन्ताम् ३। मृत पितरों का आवाहन करते जल देवें। शङ्खस्य त्रिष्टुप् पितरः॥ ओं उदीरतामवर उत्परास उन्मध्यमाः पि-

तरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ यमस्य त्रिष्टुबऽङ्गिरसः ॥ अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयँ सुमतौ याज्ञियानामपि भद्रे सौमनसे स्याम ॥ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽन्त्वस्मान् ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥ नमः स्वधा च स्वाहा च नित्यमेव भवन्त्विह । ॐ तत्सद्ब्रह्म अद्यतावत्०— आज के मास पक्ष तिथि और वार उच्चारण करके पुरुषों को तीन २ और स्त्रियों को एक २ जलाञ्जलि देदेवें । पिता स्वधा नमः तृप्यताम् ३

जल देते जावें । ऊर्जं वहन्तीरमृतं घृतं मधु पयः कीलालं परिस्रुतम् । स्वधास्थ तर्पयत मे पितॄन् ॥ पितृभ्यः स्वधायिभ्यः स्वधा नमः । पितामहेभ्यः स्वधायिभ्यः स्वधा नमः । प्रपितामहेभ्यः स्वधायिभ्यः स्वधा

नमः ॥ ओं ये[1] चेह पितरो ये च नेह याँश्च विद्म याँ २॥ उ च न प्रविद्म ॥ त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञँ सुकृतं जुषस्व पितामह का नाम और गोत्र बोल कर तीन बार जल देवें :—

पितामहः—स्वधा नमः तृप्यताम् ३। पितरों का ध्यान करते जल देते जायें :—

नारायणस्यार्षम् ॥ ओं मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ १ ॥ मधु नक्तमुतोषसो मधुमत्पार्थिवँ रजः । मधु द्यौरस्तु नः पिता ॥ २ ॥ मधुमान्नो वनस्पतिर्मधु माँ २॥ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ३ ॥

प्रपितामह का नाम गोत्र समेत बोलें :— प्रपितामहः स्वधा नमः तृप्यताम् ३ ॥

श्रद्धा से झुक कर और अञ्जलि धर कर नीचे के मन्त्र पढ़ें :— ओं नमो वः पितरो मन्यवे । नमो वः पितरः शुष्माय । नमो वः पितरो जीवाय । नमो वः पितरो रसाय । नमो वः पितरो बलाय । नमो वः पितरः क्रूराय । नमो वः पितरः स्वधा वः ।

---

१ पुराणपुस्तकेषु सर्वा एताः पितृगायत्र्यः प्रथममेकत्रैव युगपद् दृश्यन्ते यथा-शन्नस्त्रिष्टुप्, उदीरतामवर०, यमस्यत्रि० अङ्गिरसो नः, आयन्तु नः, ऊर्जं वहन्ती; पितृभ्यः स्वधायिभ्यः, ये चेह पितरः, मधुवाता०, नमो वः पितरो०, देवताभ्यः, इति । अनन्तरं पिता पितामहः प्रपितामहः इत्यादि ॥

पितरो यत्र पितरः । स्वधा यत्र यूयं स्थ सा युष्मासु तथा यूयं यथाभागं मादयध्वं येह पितर ऊर्ग्यत्र वयं स्मः सास्मासु तस्यै वयं ज्योग्जीवन्तो भूयास्म ॥

स्वर्गवासिनी माता पितामही और प्रपितामही का नाम, और गोत्र बोल कर तीन २ बार देवें माता – स्वधा नमः तृप्यताम् ३ । पितामही स्व० ३ । प्रपितामही स्व० ३ । आगे पुरुषों को तीन २ बार परन्तु स्त्रियों को एक २ बार ही नाम और गोत्र बोल कर देवें :— मातामहः स्व० ३ । प्रमातामहः स्व० ३ । वृद्धप्रमातामहः स्व० ३ । मातामही[1] स्व० १ । प्रमातामही स्व० १ । वृद्धप्रमातामही स्व० १ । और २ सम्बन्धियों को तथा गुरु गुरुपत्नी परमगुरु आदिकों को भी उनका नाम और गोत्र बोल कर जल देदेवें :—

अन्ये च पितरः ॥ मातृपक्ष्यास्तु ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः ॥ ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः । जलदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् ॥ समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यो हिमपानं स्वधा, क्षीरपानं

१ मातृत्रयीभिन्नस्त्रीभ्य एकैकोञ्जलिर्देयः ॥

स्वधा, मधुपानं स्वधा, तिलोदकं स्वधा, उदकतर्पणं स्वधा। हिमं २ रजतम् २ गर्दन और दाईं भुजा में यज्ञोपवीत रख कर अंगुलियों के सिरों पर से जल देवें :— सव्येन। वसन्ताय नमः। ग्रीष्माय नमः वर्षाभ्यो नमः शरदे नमः। हेमन्ताय नमः। शिशिराय नमः। शड्तुभ्यो नमः॥ देवासुरास्तथा यक्षा नागा गन्धर्वकिन्नराः। पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः॥ गर्दन तथा दो अंगूठों में यज्ञोपवीत रख कर कनिष्ठाओं के मूल पर से दो हाथों के अन्दर से जल देवें :— कण्ठोपवीती। जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः। तृप्तिमेते प्रयान्त्वाऽऽशु मद्दत्तेनाम्बुनाऽखिलाः॥ बाईं भुजा में यज्ञोपवीत रखकर दाईं अंगूठे और तर्जनी के मध्य से जल देवें :— अपसव्येन। नरकेषु च सर्वेषु यातनासु च ये स्थिताः। तेषामाप्यायनायैतद्दीयते सलिलं मया॥ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः। ते तृप्तिमखिला यान्तु यश्चास्मत्तोऽभिवाञ्छति॥ येषां गृहे मया भुक्तं येषां भुं-

जाम्यहं पुनः । पुत्रदारविहीनाश्च नरके वा वसन्ति ये ॥ तेभ्यः सर्वेभ्यः पितृभ्य इदमस्तु तिलोदकम् ॥ आ ब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः । वंशद्वयेऽस्मिन्मम सङ्गताश्च तेभ्यस्तिलैर्मिश्रजलं दधामि ॥ ऊपर के 'सव्येन' की नाईं यज्ञोपवीत :— सव्येन । विष्णुपीठे भद्रपीठे तीर्थे देवसमागमे । यागार्चनेऽग्निकार्ये च देवब्राह्मणसन्निधौ । दद्यान्मन्त्रमयं तोयं पितृणामात्मतृप्तये । यत्नेन प्रत्यहं कुर्याद्देवर्षिपितृतर्पणम् । सर्वं प्रतिग्रहे होमे स्नाने दाने शिवार्चने । अध्यापने तथा यज्ञे य इदं तर्पणं पठेत् । धनं कीर्तिं यशश्चैव नित्यं च सुखमश्नुते । बह्वायुश्च बहून्पुत्रान्पठमानो लभेत्सदा । वपुः पूतं पवित्रं च नित्यं गोदानिकं फलम् ॥ नमो देवेभ्यः । ऊपर के 'कण्ठोपवीती' की नाईं यज्ञोपवीत :— कण्ठोपवीती । स्वाहा ऋषिभ्यः ऊपर के 'अपसव्येन' की नाईं यज्ञोपवीत :— अपसव्येन ।

स्वधापितृभ्यः । ऊपर के 'सव्येन' की नाईं :— सव्येन । आब्रह्मस्तम्भपर्यन्तं ब्रह्माण्डं सचराचरं जगत्तृप्यतु ३ घण्टा शब्द पूर्वक विष्णु को शब्दहीन शङ्खसे औरों को धारापात्रसे अपने २ मन्त्रों से शुद्ध जलका स्नान :— तद्विष्णोरिति मन्त्रगुडकम् । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपण्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ भगवते मासपतये नारायणाय मार्गशीर्षे (इत्यादि) भगवते वासुदेवाय ८, यो रुद्रो अग्नौ० भगवते भवाय देवाय ८, गणानां त्वा० भगवते विनायकाय ८, चित्रं देवाना० ह्रांह्रीं-सः सूर्याय ८, जातवेदसे० भगवत्यै अमायै ८, श्रीविष्णुपञ्चायतनदेवताभ्यो मन्त्रगुडकं नमः ॥

बाईं हथेली के मध्य में थोडासा चावलों समेत जल लेकर और उसी हाथकी तर्जनी और अंगूठे के सिरोंसे चावलभी पकडकर इसबायें हाथको प्रतिमाओंकी चारों ओर घुमा लाकर उस जल और चावलों को अपने बायें कन्धे परसे फेंक देवें :— आरात्रिका । प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति । यातुधानस्य रक्षसो बलं वि रुज

वीर्यम् ॥ श्रीविष्णुपञ्चायतनदेवताभ्य आरात्रिकां परिकल्पयामि नमः ॥ दायें अंगूठे तथा तर्जनी के सिरेसे प्रत्येक प्रतिमाका स्पर्श करके प्रत्येकबार अपने नेत्रों को स्पर्श करें :— नेत्रस्पर्शनम् । तां वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिश्रृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥ पञ्चायतनदेवताभ्यो नेत्रस्पर्शनं नमः ॥ जल-चन्दन-द्वारिका का गोमतीचक्र-शङ्ख-तुलसीपत्र-घण्ठाकाशब्द-विष्णुप्रतिमा और ताम्बेकापात्र यह आठ चरणामृत के अङ्ग हैं।[1] अब चरणामृती (ताम्रपात्र) में जल-विमाचन्दन-तुलसीपत्र वा पुष्प तथा विष्णुप्रतिमा शिवप्रतिमा-तथा देवीचक्र रखते पढें । यादरखें कि विष्णुप्रतिमा के बिना शिव और देवी का चरणामृत न लिया करें ॥

उदकं चन्दनं चक्रं शङ्खश्च तुलसीदलम् ।
घण्ठा शिला ताम्रपात्रमष्टाङ्गं चरणामृतम् ॥

नन्दिनी नलिनी सीता मालती च त्रिमार्गगा । विष्णुपादाग्रसम्भूता गङ्गा त्रिभुवनेश्वरी । भागीरथी भोगवती जाह्नवी त्रिदशेश्वरी । इति द्वादशनामानि चरणामृतभाजने ॥ घण्टाशब्दपूर्वक विष्ठरसहित शब्दहीन शङ्खसे विष्णुके ऊपर शुद्धजलकी धारा छोडकर औरों के ऊपर विष्ठरसहित धारापात्रसे शुद्धजल की धारा छोडकर चरणामृत लेवें ॥

---

१ जलैर्हि येषां तुलसीविमिश्रैः पादोदकैः चक्रशिलासमुद्भवैः ।
नित्यं त्रिसन्ध्यं प्लवते न गात्रं खगेन्द्र ते धर्मबहिष्कृता नराः ॥

तद्विष्णोरिति चरणामृतम् ॥ तद्विष्णोः० भगवते मासपतये नारायणाय । भगवते वासुदेवाय ८ लक्ष्मीसहिताय नारायणाय चरणामृतं गृह्णामि नमः ॥ माथेपर विष्टरसे चरणामृत जल के कण छिड़कें :— तद्विष्णोः० आपो हि ष्ठा० इत्यादि ॥ (शिरसा धारयाम्यहम् ) अब चौकी में जहां कि पंचायतन को बिठानाहै, पांचों देवताओं के लिए अपने २ स्थान पर जहां पहले मनोहर कीमती आसन बिछा रखा है उसपर क्रम से पुष्परूप आसन प्रत्येक नाम से रखें :—

विष्णु के स्थान पर आसनाय नमः गरुडासनाय नमः पद्मासनाय नमः शतदलपद्मासनाय नमः सहस्रदलपद्मासनाय नमः ॥ शिव के स्थान पर आसनाय नमः वृषभासनाय नमः शतदल० सहस्रदल० ॥ गणेश के स्थान पर आस० मूषकासनाय नमः शतदल० सहस्रद० ॥ सूर्य के स्थन पर आस० अश्वासनाय नमः शतदल० सहस्रद० ॥ देवीके स्थान पर आस० सिंहासनाय नमः शतदल० सहस्रदलपद्मासनाय नमः ॥ आसन देकर पढ़े

किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूष-

णाय । लक्ष्मीकलत्राय किमस्ति देयं वागीश किं ते वचनीयमस्ति ॥ किमासनं ते वृषभासनाय किं भूषणं वासुकिभूषणाय । उमाकलत्राय किमस्ति देयं गौरीश किं ते वचनीयमस्ति ॥ किमासनं ते मूषकासनाय किं भूषणं नागविभूषणाय । वल्लभाकलत्राय किमस्ति देयं विघ्नेश किं ते वचनीयमस्ति ॥ किमासनं ते अश्वासनाय किं भूषणं हेमविभूषणाय । प्रभाकलत्राय किमस्ति देयं लोकेश किं ते वचनीयमस्ति ॥ किमासनं ते सिंहासनायै किं भूषणं हारविभूषणायै । लक्ष्मी स्वनाम्नैव किमस्ति देयं वागीश्वरि किं वचनीयमस्ति ॥ अब पञ्चायतन प्रतिमाओं को भद्रपीठ से दाईं तर्जनी के स्पर्श बिना उठाकर बायें हाथपर रखेहुए शुद्ध और निर्मल अंगूचे से पूंछ कर केसरसमेत घिसे चन्दन का लेप अर्थात् (तिलक) लगाकर विष्णुको साबूत न कूटी हुई जव, शिवको साबूत चावल तथा औरोंको दोनों, ऊपर चढाकर चौकीमें अपने २ आसन पर बिठाते नीचेके श्लोक और शुकस्तुति मुकुन्दमाला इत्यादि यथाभक्ति पढें । :–

ततउत्थापनमन्त्राः उत्तिष्ठ भगवान्विष्णो ! उत्तिष्ठ कम-

लापते ! । उत्तिष्ठ त्रिजगन्नाथ ! त्रैलोकीमङ्गलं कुरु ॥ उत्तिष्ठ भवञ्शम्भो उत्तिष्ठ गिरिजापते । उत्तिष्ठ त्रिजगन्नाथ त्रैलोकीमङ्गलं कुरु ॥ उत्तिष्ठ भगवन्गणेश उत्तिष्ठ वल्लभापते । उत्तिष्ठ विघ्नहर्त्तः त्वं त्रैलोकीमङ्गलं कुरु ॥ उत्तिष्ठ भगवन्सूर्य उत्तिष्ठ सुप्रभापते । उत्तिष्ठ त्रिजगच्चक्षुः त्रैलोकीमङ्गलं कुरु ॥ उत्तिष्ठ शारदे देवि उत्तिष्ठ त्रिजगत्प्रिये । उत्तिष्ठ त्रिजगन्मातः त्रैलोकीमङ्गलं कुरु ॥ प्रतिमाओंको विष्टरसे रथेअक्षेष्वित्यऽ-जलकी छींट देवें :-

नुलेपनम् । विष्णुको रथे अक्षेष्वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥ शिवको या रुद्रेषु या वसुषु आदित्येषु मरुत्सखा या तु विश्वेषु देवेषु सा नोत सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥ गणेशको या हस्तिनि द्वीपिनि या हिरण्ये त्विषिरप्सु गोषु या

पुरुषेषु । इन्द्रं या० सूर्यको सिंहे व्याघ्रे उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या । इन्द्रं या० देवीको या राजन्ये दुन्दुभावायाता यामश्वस्य वाजे पुरुषस्य मायौ । इन्द्रं या० श्रीविष्णुपञ्चायतनदेवताभ्य अनुलेपनं नमः ॥ नीचेके दो मन्त्र पढके अपने २ नामोंसे वस्त्र (अथवा वस्त्रके लिए पुष्प मात्रही) चढावें । 'तं यज्ञं युवा सुवासा' इतिवस्त्रम् । तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः । तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति साध्यो ३ मनसा देवयन्तः ॥ भगवते मासपतये नारायणाय० भगवते वासुदेवाय ८, भगवते भवाय देवाय ८, भगवते विनायकाय ८, भगवते ह्रांह्रींसः सूर्याय ८,

अग्निपुराणे-दुकूलपट्टकौशेयक्षौमकार्पासकादिभिः । वासोभिः पूजयेद्देवं सशुक्लैरात्मनः प्रियैः ॥ वस्त्राणि सपवित्राणि सारवन्ति मृदूनि च । रूपवन्ति हरेर्दत्त्वा सुदशानि नवानि च ॥ यावद्वस्त्रस्य तन्तूनां परिमाणं भवत्यथ । तावद्वर्षसहस्राणि विष्णुलोके महीयते ॥

भगवत्यै श्रमायै ८, श्रीविष्णुपञ्चायतनदेवताभ्यो वस्त्रं परिकल्पयामि नमः ॥ ऊपरकी भान्ति यज्ञोपवीत अथवा पुष्पमात्र चढावें :—

तस्माद्यज्ञाद्यज्ञोपवीतमिति यज्ञोपवीतम् । तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् । पशूँस्ताँश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ मासपतये नारायणाय० भगवते वासुदेवाय८, भगवते भवाय देवाय८, भगवते विनायकाय८, भगवते ह्रांह्रींसः सूर्याय८, भगवत्यै श्रमायै ८, श्रीविष्णुपञ्चायतनदेवताभ्यो यज्ञोपवीतं परिकल्पयामि नमः ॥ इसी प्रकार केसर समेत तस्माद्यज्ञाद्गन्धद्वाविसा चन्दन चढावें :—

रेति चन्दनम् । तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥

---

नारसिंहे—यो वै शुक्लं च पीतं च स्वर्णपट्टादिनिर्मितम् । यज्ञोपवीतं गोविन्दे दद्याद्वेदान्तगो भवेत् ॥ यज्ञोपवीतदानेन विष्णवे परमात्मने । भवेद्विप्रश्चतुर्वेदी शुद्धधीर्नात्र संशयः ॥

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ भगवते मासपतये नारायणाय० भगवते वासुदेवाय ८, भगवते भवाय देवाय ८, भगवते विनायकाय ८, भगवते ह्रांह्रींसः सूर्याय ८, भगवत्यै श्रमायै ८, श्रीविष्णुपञ्चायतनदेवताभ्यः समालभनं गन्धो नमः ॥

---

विशुद्धेश्वरतन्त्रे-देवांगुष्टतर्जनीभ्यां पुष्पाणां क्षेपणं चरेत् । नार्चयेदेकहस्तेन यदीच्छेत्सिद्धिमात्मनः ॥ तर्जन्यांगुष्टसंयोगात्पुष्पार्चा समुदाहृता । अथवाऽञ्जलिदानेन नान्यथेति कदाचन ॥ अपर्युषितनिच्छिद्रैः पुष्पैः कीटादिवर्जितैः । दुर्गन्धरहितैश्चैव पूजयेन्मधुसूदनम् ॥ वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् । न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ॥ अत्रिः पत्रिस्तु मादला गोविन्दतुलसी तथा । बिल्वा पद्मश्च दतूरा अष्टौ पुष्पाणि पूजने ॥ तुलस्यौ पङ्कजे जात्यौ केतक्यौ करवीरकौ । शस्तानि दश पुष्पाणि तथा रक्तोत्पलानि च ॥ मनोहरैश्च गन्धैश्च पुष्पैःरक्तैः सितैश्च वा । अभ्यर्च्य विष्णुमीशं वा तत्तत्सारूप्यतां व्रजेत् ॥ अगस्त्यकुसुमैर्देवं येर्चयन्ति जनार्दनम् । तेषां दर्शनमात्रेण नरकाग्निः प्रशाम्यति ॥ स्कान्दे—अपराधसहस्राणि ह्यपराधशतानि च । नशान्ति कमलैकेन योर्चयेत्कमलापतिम् ॥ पाद्मे—पद्मपुष्पेण यो विष्णुं शिवं वार्चति यो नरः । स याति विष्णुभवनं कुलत्रयसमन्वितः ॥ स्वयमाहृत्य पुष्पाणि भक्त्या वै केशवार्चनम् । यः करोति स राजेन्द्र वंशानामुद्धरेच्छतम् ॥ उत्तमं स्वार्जितं पुष्पं मध्यमं वन्यमुच्यते । अधमं तु क्रियाक्रीतं पारक्यं त्वधमाधमम् ॥ जलजं स्थलजं वापि पुष्पपत्रं यथोदितम् । यथोत्पन्नं तथा देयं बिल्वपत्रमधोमुखम् ॥ देवोपरि च यद्दत्तं वामहस्तधृतं च यत् । अधोवस्त्रधृतं चैव जले च क्षालितं च यत् ॥ देवता तन्न गृह्णाति पुष्पं निर्माल्यतां गतम् ।

अब विष्णुको केवल पुष्प, औरोंको अक्षतों
समेत पुष्प चढावें                    तस्मादश्वा पुष्पवतीतिपुष्पम् ॥

तस्मादश्वा अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ पुष्पवतीः प्रसुमतीः फलिनीरऽफला उत अश्वा इव सजित्वरी-

---

न शुष्कैः पूजयेद्देवं कुसुमैर्न महीगतैः । न विशीर्णदलैश्चैव न चैवान्तर्विकासितैः ॥
नाक्षतैः पूजयेद्विष्णुं न केतक्या सदाशिवम् । आरक्तैर्नार्चयेच्छम्भुं करवीराम्बुजैर्विना ॥
वामहस्ते तु पुष्पाणि ताम्रपात्रे तु चन्दनम् । गन्धोदकं चर्मपुटे निषिद्धं सर्वकर्मसु ॥
नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणेश्वरम् । दूर्वाभिर्नार्चयेद्दुर्गां केतकैर्न महेश्वरम् ॥
न शङ्खस्नापनं शम्भुं न चार्घैर्मधुसूदनम् । शेषान्समर्चयेच्चार्घैर्मिश्रैर्विनायकं स्मृतम् ॥
धात्रीपुष्पमाहात्म्यं—धात्रीवृक्षप्रसूनैश्च योऽर्चयेच्चक्रचिह्नितम् । पुष्पे पुष्पेऽश्वमेधस्य फलं प्राप्नोति नारद ॥ धात्रीपुष्पैर्नवीनैश्च कोमलैर्हरिमर्चयेत् । यमलोके महाघोरे न वसन्त्येवमऽर्चकाः ॥ विष्णुरहस्ये—दूर्वाङ्कुरं हरौ यस्तु पूजाकाले प्रयच्छति । पूजाफलं शतगुणं सम्यगाप्नोति मानवः ॥ पुष्पमालार्पणमाहात्म्यम्—मल्लिकाकुसमं जातीकुसुमं च विशिष्यते । जातीपुष्पसहस्रस्य यो मालां संप्रयच्छति । कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वसेद्विष्णुपुरे विप्र विष्णुतुल्यपराक्रमः ॥ मुनिपुष्पकृतां मालां यः प्रयच्छति केशवे । देवादयोऽपि भक्तिं वै कुर्वन्ति तस्य शङ्कया ॥ तुलसीमाहात्म्यं स्कान्दे—कोटिब्रह्माण्डमध्ये तु यानि तीर्थानि भूतले । तुलसीमूलमाश्रित्य तान्येवाधिवसन्ति वै ॥ संक्रान्तावऽर्कपक्षान्ते द्वादश्यां निशि सन्ध्ययोः । यैश्छिन्नं तुलसीपत्रं तैश्छिन्नं हरिमस्तकम् ॥ मोक्षैकहेतुधरणे तुलसि विष्णुसमर्थासि गुरुप्रियासि । आराधनार्थं पुरुषोत्तमस्य लुनामि पत्रं तुलसि क्षमसु ॥ तुलस्यमृतधामासि सदा श्रीभगवत्प्रिये । केशवार्थं विचिनोमि मम दोषो न दीयते ॥ योऽर्चयेद्धरिपादाब्जं तुलस्याः कोमलैर्दलैः । न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कथञ्चन ॥

वीरुधः पारयिष्णवः ॥ भगवते मासपतये नाराय-
णाय० भगवते वासुदेवाय ८, भगवते भवाय देवा-
य ८, भगवते विनायकाय ८, भगवते ह्रांह्रींसः सू-

---

मालती जाति केतकी मल्लिकाऽशोक चम्पक पून्नाग बकुलोत्पल कुन्द करवीर पाटला तगर पुष्पाण्यन्यानि सुरभीणि च । अपामार्ग भृंगराज खदिर शमी दूर्वा कुशा चमनक बिल्वाऽम्रमञ्जरी तुलसीपत्राण्युत्तरोत्तरं प्रियाणि, तुलसी तु सर्वाधिका ॥ इति विष्णोः प्रियपुष्पाणि ॥

विष्णुके प्रियपुष्प । कमल, केतकी, सोनेका बनाया केतकीपत्र, सपेद और श्यामरंग के करवीर, आम्रवृक्षकी पुष्पोंसे भरी मञ्जरी, कदम्ब, जलकमल, नीलोत्पल, सितोत्पल, चम्पक, बन्धूक, मालती, पद्म, अपर्युषित छिद्ररहित और कीटरहित गडीरीपुष्प, जाती-पुष्प, बलाकेपुष्प, अगस्त्य, बकुल, अशोक, तिलकपुष्प, सहकारकी मञ्जरी, सुगन्ध को-मल और सफेदपुष्प तुलसी दलसमेत, स्वर्णपुष्प, तुलसी, दूर्वांकुर, बिल्वपत्र, जगडी-पत्र, आमलेके फल और पुष्प, ॥

सफेद तुलसी, काली तुलसी, स्थलकमल, जलकमल, सफेद और जर्द चमेली, दो प्र-कारकी केतकी, और दो प्रकारका करीर, और लाल उत्पल, यह पुष्पभीश्रेष्ट हैं । अत्रि प-त्रि मादला गोविन्दतुलसी बिल्व पद्म दत्तूर यह पुष्पभी पूजामें कहे हैं ॥

संवत्सरं च तुलसी तदर्धं बिल्वपत्रकम् । कमलं च त्रिरात्रं स्यादन्यत्पुष्पं दिने दिने ॥ पङ्कजं पञ्चरात्रं स्याद्दशरात्रं च बिल्वकम् । तुलस्यैकादशाहात्तु पुनः प्रक्षाल्य पूजयेत् ॥

अन्यत्रोक्तं तुलस्यगस्त्यबिल्वानि गङ्गावारि न दुष्यति ॥

बिल्व १० दिन (६ मा) अपामार्ग १ दिन, तुलसी ११ दिन (१ बर्स), जाती १ दि-न, शमी ६ दिन, शतावरी ११ दिन, दूर्वा ८ दिन, केतुकी ४ दिन, मन्दार १ दिन, पद्म ५ दिन, (अन्यत्र कहाहै ३ दिन) नागकेसर २ दिन, दर्भ ३० दिन, अगस्त्य १ दिन, म-ल्लिका ४ दिन, चम्पक ९ दिन, और करवीर ८ दिन के बाद पर्युषित होजाता है । बि-ल्व पङ्कज और तुलसी उनकी पर्युषिता फिर धोनेसे हटतीहै ॥

र्याय ८, भगवत्यै श्रमायै ८, श्रीविष्णुपञ्चायतन-
देवताभ्योऽर्घो नमः पुष्पं नमः ॥   ततः पुरुषसूक्तेन,
लक्ष्मीसूक्तेन, तद्विष्णोरित्यृग्द्वयेन च देवस्य पुष्पपूजा कार्या ॥

**सहस्रशीर्षाः** (१६ मन्त्रोंसे) और **हिरण्यवर्णां** (२१ मन्त्रोंसे) विष्णु-
को पुष्प चढाकर नीचेके प्रत्येक मन्त्रसे भी चढावें :—   अथ दिक्पालपूजा ॥

'पूर्वे' नारायणाय नमः। 'दक्षिणे' पुण्डरीकाक्षाय
नमः। 'पश्चिमे' गोविन्दाय नमः। 'उत्तरे' मधुसूद-
नाय नमः। 'ऐशान्यां' विष्णवे नमः। 'आग्नेय्यां'
जनार्दनाय नमः। 'नैऋत्यां' पद्मनाभाय नमः।
'वायव्यां' वामनाय नमः। 'ऊर्ध्वे' वासुदेवाय नमः।
'आधारे' लोकनाथाय नमः। 'मध्ये' केशवाय न-
मः। शङ्खाय नमः। चक्राय नमः। गदायै नमः।

---

अक्षतोंसे विष्णुकी पूजा नहीं करनी चाहिए। द्वादशीके दिन विष्णुको षोडशस्नान नहीं देना चाहिए ॥ पर्युषित पुष्प और पर्युषित जलको त्यागना चाहिए। परन्तु तुलसी और गङ्गाजल पर्युषित त्यागना नहीं चाहिये ॥ सूखे पुष्प वा स्वयं गिरेहुए पुष्प अथवा गिरेहुए पत्रवाले पुष्प पूजामें निषिद्ध हैं ॥

पद्माय नमः । हलाय नमः । मुसलाय नमः । कौ-
स्तुभाय नमः । जयाय नमः । विजयाय नमः । धा-
त्र्यै नमः । शेषाय नमः । विहङ्गनाथाय नमः । ग-
रुडाय नमः । 'द्वारे' चण्डाय नमः । उपचण्डाय
नमः । जयाय नमः । विजयाय नमः । दक्षिणायना-
य नमः । उत्तरायनाय नमः । ॐ भूर्लोकाय नमः ।
ॐ भुवो लोकाय नमः । ॐ स्वर्लोकाय नमः । ॐ
महो लोकाय नमः । ॐ जनो लोकाय नमः । ॐ त-
पो लोकाय नमः । ॐ सत्यलोकाय नमः । ॐ भू-
र्भुवःसुर्लोकाय नमः । ऋग्वेदाय नमः । यजुर्वेदाय
नमः । सामवेदाय नमः । अथर्वणवेदाय नमः । कृ-
तयुगाय नमः । त्रेतायुगाय नमः । द्वापरयुगाय न-
मः । कलियुगाय नमः । तद्विष्णोः परमं पदं० भग-
वते मासपतये नारायनाय नमः । भगवते वासुदे-

वाय नमः ८, अर्घों नमः पुष्पं नमः । शिवको योरुद्रो अग्नौ० भगवते भवाय देवाय नमः ८, अर्घों नमः पुष्पं नमः ॥ गणेशको गणानां त्वा० भगवते विनायकाय नमः ८, अर्घों नमः पुष्पं नमः ॥ सूर्यको चित्रन्देवानां० भगवते ह्रांह्रींसः सूर्याय नमः ८, अर्घों नमः पुष्पं नमः ॥ देवीको जातवेदसे० भगवत्यै अमायै नमः ८, अर्घों नमः पुष्पं नमः ॥

उठकर चारों ओर धूप घुमावें :— यत्पुरुषं, धूरसीति धूपम् ।

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखङ्किमस्य कौ बाहू का ऊरू पादा उच्येते ॥ धूरसि धूर्व धूर्वन्तं यो ऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वामः तं च धूर्व ॥ देवानामसि वह्नितमं सस्नितमं पप्रितमं जु-

---

स्कान्दे—मा मूढ मथुरां गच्छ मा प्रयागं च नर्मदाम् । धूपदानेन देवेशात्फलं सर्वमऽवाप्स्यसि ॥ पाद्मे—नारायणाय यो धूपं दद्याद्गुग्गुलवासितम् । स याति परमं धाम यत्सुरैरऽपि दुर्लभम् ॥ ददाति हरये धूपं सकर्पूरं सकेसरम् । युक्तं मृगमदेनापि स गच्छेद्वैष्णवं पदम् ॥

ष्टतमं देवहूतमम् विष्णोः क्रमोसि अह्नुतमसि ह-विर्धानं दृंहस्व मह्वामित्रस्य त्वा चक्षुषा प्रेक्षे उरु त्वा वाताय वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसा-ङ्गिरस्वत् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन च्छन्दसाङ्गिर-स्वत् आदित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाङ्गि-रस्वत् विश्वे त्वा देवा वैश्वानरा धूपयन्त्वाऽनुष्टुभेन च्छन्दसाङ्गिरस्वत् ॥ इन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥ भगवते मासपतये नारायणाय० भगवते वासुदेवाय ८, भगवते भवा-य देवाय ८, भगवते विनायकाय ८, भगवते ह्रांह्रीं-सः सूर्याय ८, भगवत्यै अमायै ८, श्रीविष्णुपञ्चा-यतनदेवताभ्यो धूपं परिकल्पयामि नमः ॥

उठकरही रत्नदीप और कापूर घुमावें, घण्टा और शङ्खभी भजावें — ब्राह्मणोसि, तेजोसीति रत्नदीपं कर्पूरं च ।

---

वृ०नार०-घृतेन दीपं यो दद्यात्तिलतैलेन वा पुनः । निमेषात्सकलं तस्य पापं हरति केशवः ॥ स्कान्दे-शुद्धघृतान्वितं दीपं विष्णवे शङ्कराय वा । दत्त्वा नरः सर्वकामान्संप्राप्नोति स्वरोत्तम ॥ भविष्योत्तरे-प्रज्वाल्य देवदेवस्य कर्पूरेण तु दीपकम् । अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ दीपो वै ज्वलितो येनाऽहोरात्रं च हरेर्गृहे । एकादश्यां मुनिश्रेष्ट स स्वर्गसुखभाक् भवेत् ॥ नीराजनमहात्म्यं भविष्योत्तरे-बहुवर्तिसमायुक्तां ज्वलंतीं केशवाग्रतः । कुर्यादारात्रिकां यस्तु कल्पकोटि दिवं वसेत् ॥ कर्पूरेण च यः कुर्याद्भक्त्या केशवमूर्धनि । स वैष्णवो नरो ज्ञयो विमुक्तो नरकार्णवात् ॥ आरात्रिकां हरेर्यस्तु सकर्पूरां प्रजागरे । कुरुते मोक्षमाप्नोति कुलायुतसमन्वितः ॥

ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ तेजोसि शुक्रमसि ज्योतिरसि धामासि प्रियं देवानामऽनाधृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि यज्ञेभ्यस्त्वा यज्ञियेभ्यो गृह्णामि ॥ भगवते मासपतये नारायणाय० भगवते वासुदेवाय ८, भगवते भवाय देवाय ८, भगवते विनायकाय ८, भगवते ह्रांह्रींसः सूर्याय ८, भगवत्यै अमायै ८, श्रीविष्णुपञ्चायतनदेवताभ्यो रत्नदीपं कर्पूरं च परिकल्पयामि नमः ॥ उठकरही चामर करें शङ्ख घण्टा आदि सब गाने बजाने के वाद्यभाण्ड भी बजावें :— देवस्य त्वेति चामरं । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । उपरकी ही तरह करें 'जय नारायण ?' इत्यादि ।

---

कूर्मपुरा०-देवाय चामरं दद्यान्मणिदण्डविभूषितम् । हेमरूप्यादिकं दण्डं तस्य पुण्यफलं शृणु ॥ चामरव्यग्रहस्ताभिर्दिव्यस्त्रीभिः परिवृतः । महाभोगविमानस्थश्चिरं देवपुरे वसेत् ॥ तालवृन्तकवातेन पवित्राम्बरवायुना । यैर्ग्रीष्मे वीजितो विष्णुस्ते सर्वे मोक्षगामिनः ॥

भगवते मासपतये नारायणाय० भगवते वासुदेवाय ८, भगवते भवाय देवाय ८, भगवते विनायकाय ८, भगवते ह्रांह्रींसः सूर्याय ८, भगवत्यै अमायै ८, श्रीविष्णुपञ्चायतनदेवताभ्यः चामरं नमः ॥

ऊपर छाता रखें काण्डात्काण्डादिति छत्रम् । काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्र तनु सहस्रेण शतेन च ॥ भगवते मासपतये नारायणाय० भगवते वासुदेवाय ८, भगवते भवाय देवाय ८, भगवते विनायकाय ८, भगवते ह्रांह्रींसः सूर्याय ८, भगवत्यै अमायै ८, श्रीविष्णुपञ्चायतनदेवताभ्यः छत्रं नमः ॥ शीशा दिखावें, पीछे अपना मुखभी देखें तच्चक्षुरिति आदर्शम् ।

१ कूर्मपु०—दर्पणस्य प्रदानेन रूपवान्दर्पवान्भवेत् । दर्शयित्वा तथा तं च नाभाग्यस्त्वथ जायते ॥ रत्नाभरणमहात्म्यं स्कान्दे—स्वशक्त्या देवदेवं च भूषणैर्भूषयन्ति ये । हेमजै रत्नजैः शुद्धैर्मणिजैरपि शोभनैः ॥ सुवर्णाभरणैर्दिव्यैर्हारकेयूरकुण्डलैः । मुकुटैः कटकाद्यैश्च यो विष्णुं पूजयेन्नरः । सर्वपापविनिर्मुक्तः सर्वाभरणभूषितः । वसेद्विष्णुपुरे श्रीमान्यावदिन्द्राश्चतुर्दश ॥ अलङ्कारप्रियो विष्णुर्जलधाराप्रियः शिवः । प्रदक्षिणाप्रिया देवी ब्राह्मणो भोजनप्रियः ॥ नमस्कारप्रियो भानु र्गणपो मोदकप्रियः ॥

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतँ शृणुयाम शरदः शतं प्र ब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ मासपतये नारायणाय० श्रीविष्णुपञ्चायतनदेवताभ्य आदर्शं नमः ॥

धारापात्रसे निर्माल्यमें जलधारा छोडें　एताभ्यः श्रीविष्णुपञ्चायतनदेवताभ्यो (कलशयागदेवताभ्यः) धूपदीपसङ्कल्पात्सिद्धिरस्तु धूपो नमः दीपो नमः ॥

पञ्चायतन के उपर वस्त्र वा पुष्पही रखें　एताभ्यः श्रीविष्णुपञ्चायतनदेवताभ्यो वासो नमः ॥　नमस्कार करें　एतासां श्रीविष्णुपञ्चायतनदेवतानामर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥　अब कटोरीमें चावल दूध शहद वा क्षीर रखकर अर्पण करें, शङ्ख घण्टा आदिभी बजावें

चन्द्रमा मनसो हिरण्यगर्भ इत्यष्टाभिश्चरु　चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च प्रा-

णाद्वायुरजायत ॥ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ भगवते मासपतये नारायणाय० भगवते वासुदेवाय न०, भगवते भवाय देवाय न०, भगवते विनायकाय न०, भगवते ह्रांह्रींसः सूर्याय न०, भगवत्यै अमायै न०, श्रीविष्णुपञ्चायतनदेवताभ्यः मात्रामधुपर्कं चरुं नमो नैवेद्यं निवेदयामि नमः ॥ फूलों की अञ्जलि चढावें :— नाभ्यआसीत् [विष्णोस्यन्तरिक्तम्] इति कुसुमाञ्जलिः । नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रो-

नृत्तगीतमाहात्म्यं स्कान्दे—गीतं वाद्यं च नृत्यं च हास्यं विष्णुकथां मुने । यः करोति स पुण्यात्मा त्रैलोक्योपरि संस्थितः । यस्तु गायति गीतानि भक्त्या नारायणाग्रतः स नृपत्वमवाप्नोति गन्धर्वाणां पुरे स्थितः ॥ कथामाहात्म्यं—वैवसुतभयं नास्ति तथा मरणजन्मनोः । यः कथां कुरुते विष्णोः सालिग्रामाशिलाग्रतः ॥ पद्मे—कुर्वन्ति ये कथां विष्णोर्ये शृण्वन्ति तु भक्तितः । श्लोकार्धं श्लोकपादं वा लभन्ते गोशतफलम् ॥
विष्णोर्नामसहस्रं तु पूजाकाले तु यः पठेत् । अष्टादशपुराणानां फलं प्राप्नोति मानवः ॥ यः पठेत्परया भक्त्या स्तोत्रपाठानि वै हरेः । सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ॥

त्रात्तथा लोकाँ अकल्पयन् ॥ (विष्णोस्यन्तरिक्षं दृंह पृथिव्याः पार्थिवान्दृंह भुवनानि विश्वा । तेषां सर्वजगतो बभूव प्राणापानौ चक्षुषा हि श्रोत्रम् ।) श्रीविष्णुपञ्चायतनदेवताभ्यः कुसुमाञ्जलिं परिकल्पयामि नमः ॥ अब परिक्रमा करें (विष्णुको चार बार, शिवको आधा, गणेशको तीन बार, सूर्यको सात बार, और देवीको एक बार, परिक्रमा करनी चाहिये) सप्तास्यासन्निति चत्वारि प्रदक्षिणानि । सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना आबध्नन्पुरुषं पशुम् ॥ ॐ नमो नारायणाय भगवन्प्रसीद ।

ॐ ध्येयं सदा परिभवघ्नमऽभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् । भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं वन्दे महापुरुष ते चरणारबिन्दम् ॥१॥

---

एकं चण्ड्यां रवौ सप्त त्रीणि दद्याद्विनायके । चत्वारि केशवे दद्याच्छिवस्याऽर्धप्रदक्षिणम् । पाद्मे—सालिग्रामशिलायां तु यः कुर्याच्च प्रदक्षिणम् । पदे पदेऽश्वमेधस्य फलमाप्नोति मानवः ॥ वृ०ना०-प्रदक्षिणं तु यः कुर्याद्विष्णोर्वै मनुजेश्वर । सर्वपापविनिर्मुक्तो देवेन्द्रत्वं समश्नुते ॥

त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम् । मायामृगं दयितयेप्सितमन्वधावद्वन्दे महा० ॥ २ ॥ श्रीमत्सुरोरुहयवांकुशचक्रचापमत्स्यांकितं नवविलोहितपल्लवाभम् । लक्ष्म्यालयं परममंगलमात्म(ध्येयं)रूपं वन्दे महा० ॥ ३ ॥ वृन्दावनान्तरमऽगादनु गोकुलानां सञ्चारिसर्वपशुभिः सुविवृद्धिकामी । सञ्चिन्तयन्नजगरो मृगपक्षिणां यद्वन्दे महा० ॥ ४ ॥ यद्गोपिका विरहजाग्निपरीतदेहाः तप्तस्तनेषु व्यजहुः परिरभ्य तापम् । रासे तदीयकुचकुंकुमपंकलिप्तं । वन्दे महा० ॥ ५ ॥ कालीयमस्तकविघट्टनदक्षमऽस्य मोक्षेच्छुभिर्विरहदीनमुखाभिरा (रात्) यौ । तत्पत्निभिस्तुतमशेषनिकामरूपं वन्दे महा० ॥ ६ ॥ ज्ञानालयं श्रुतिविमृग्यमनादिमर्च्यं ब्रह्मादिभिर्हृदि विचिन्त्य-

मगाधबोधैः संसारकूपपतितोत्तरणावलम्बं वन्दे म-
हा० ॥ ७ ॥ येनाङ्ग बालवपुषः स्तनपानबुद्धेः त्व-
दंघ्रिणाहतमनो विपरीतचक्रम् । विध्वस्तभाण्डम-
पतद्भुवि गोपमूर्तेर्वन्दे महा० ॥ ८ ॥ इत्यष्टकं पठति-
यः परमस्य पुंसो नारायणस्य नरकार्णवतारणस्य ।
सर्वाप्तिमाशु हृदि यः कुरुते मनुष्यः सम्प्राप्य दे-
हविलये लभते च मोक्षम् ॥

दोनों घुटनों दोनों बाजों सिर और छातीके बल लेटकर मन और वाणीको भी देवतामें लगाकर अष्टांग नमस्कार करें

उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा उरसा मनसा वचसा च अष्टाङ्गनमस्कारं करोमि नमः ॥

अब चावल घी आदि सङ्कल्प करें अन्नं नमः २ आज्यं २ अन्न-
मद्यादिने अद्ययथा सङ्कल्पात्सिद्धिरस्तु अन्नहीनं
क्रियाहीनं विधिहीनं द्रव्यहीनं मन्त्रहीनं च यद्गतं त-
त्सर्वमच्छिद्रं सम्पूर्णमस्तु ॥ मानोदेवता 'एवमस्तु'—इस
शब्दसे 'ऐसाहो' यह उत्तर देतेंहैं ॥

धारापात्रमें दायें हाथकी अंगुलियोंपर से जल छोडकर उसी जलसे प्रतिमापर आचमन देवें

शं नो देवीरभिष्टय आपो भवन्तु पीतये । शँ योरभि स्रवन्तु नः ॥ श्रीविष्णुपञ्चायतनदेवताभ्योऽपोशानं नमः आचमनीयं नमः ॥ फिर उपरकी तरह धारापात्रमें दायें हाथकी अंगुलियोंपर से जल छोडकर उसी जलमें दक्षिणा * (तिल, सोना, चान्दी, सोनेका सिक्का, और जल) रखकर इन सब चीजोंको अर्पण करें:—

पुनः, शन्नो देवी० श्रीविष्णुपञ्चायतनदेवताभ्यो दक्षिणार्थे तिल हिरण्य रजत निष्कर्णं ददानि ॥

धारापत्रमें बाकी बचा हुआ जल मास, पक्ष, दिन, वार, बोलकर विष्णुके उपर छोडते पढें

अपसव्येन । तत्सद्ब्रह्म अद्यतावत्—समस्तमातापितॄणां तेषां परलोके विष्णुपदवीप्राप्त्यर्थं विष्णुसायुज्यार्थं परातृप्त्यर्थं आत्मनःपुण्यवृद्ध्यर्थं विष्णुप्रीत्या तिलाम्भसा नरकोद्धरणमस्तु श्रीविष्णुर्नारायणः प्रीयतां श्रीविष्णुः प्रीतोऽस्तु ॥ इसी प्रकार शिवादिके उपर भी अलग २ करें

एवं सर्वेषामक्षयम् । नये जलसे सङ्कल्पित दक्षिणा सहित चावलोंको अर्पण करें सव्येन । एता देवताः सदक्षिणान्नेन प्रीयन्तां प्रीताः सन्तु ॥

---

* यज्ञे हि यत्किञ्चिद्विगतर्द्धिकं भवति तदियं समर्द्धयति, विशिष्टं हि यज्ञस्य साधनमेतदिति निरुक्ते । यज्ञो गन्धर्वः तस्य दक्षिणाऽप्सराः' इति, रथः पञ्चवाही दक्षिणेति च वेदे ।

नारायणको दो, औरोंको एक एक पुष्प अपने २ मन्त्रोंसे चढाकर उन्हींसे प्रणामभी करें ॥

नारायणको पुष्प और प्रणाम **तद्विष्णोः परमं पदं०** इति विष्णोः पुष्पद्वयं प्रणामश्च ॥ शिवको पुष्प और प्रणाम **यो रुद्रो अग्नौ०** इतिशिवस्य पुष्पं प्रणामश्च ॥ गणेशको पुष्प और प्रणाम **गणानां त्वा०** इति गणेशस्य पुष्पं प्रणामश्च ॥ सूर्यको पुष्प और प्रणाम **चित्रं देवाना०** इति सूर्यस्य पुष्पं प्रणामश्च ॥ देवीको पुष्प और प्रणाम **जातवेदसे०** इति देव्याः पुष्पं प्रणामश्च ॥

फिर जप स्तोत्रपाठ आदि कर्म करें ॥ और अगर उपर कलशस्थापन, अग्निहोत्रके अभिप्रायसे किया हो तो अग्निहोत्र (व्याहृति वैश्वदेव गोग्रास आदि)भी यहां पर करें ॥

**ततो जपपाठादिकं व्याहृतिवैश्वदेवादिकर्म च कुर्यात् ।**

अब नैवेद्य लावें. उसमेंसे दूसरे पात्रमें छोटेसे ३ हिस्से अलग रखकर बाकीको अमृतेशमुद्रा कियेहुए हाथसे पकडकर निवेदन करें । घण्टा और शङ्खभी बजावें ॥

**ततो नैवेद्यम् । अमृतेशमुद्रया० इत्यादि** (नैवेद्यनिवेदनविधि और मन्त्र अलग पुस्तकमें छपे हैं)

---

पाद्मे–प्रणमेद्दण्डवद्भूमौ सप्तधा (चतुर्धा) यस्तु केशवम् । पातकं तच्छरीरस्थं भस्मीभवति तत्क्षणात् ॥ नमस्करोति मनुजः सालिग्रामशिलार्चने । पापानि विलयं यांति तमः सूर्योदये यथा ॥

साध्यमन्त्रं जपेल्लक्षं तदऽर्धं वा महेश्वरि । अर्धार्धं वा महेशानि कलौ सिद्धिप्रदायकम् । जपनिष्ठो द्विजश्रेष्ठो ऽखिलयज्ञफलं लभेत् । जपसङ्ख्याप्रमाणेन दशांशं जुहुयान्मनुम् । तर्पणं तद्दशांशेन तद्दशांशेन मार्जनम् । भोजनं तद्दशांशेन मन्त्रसिद्धिर्भविष्यति ॥

नैवेद्यैर्विविधैः पुष्पैर्दीपधूपैर्विलेपनैः गीताद्यैस्तोत्रपाठाद्यै स्सालिग्रामशिलार्चनम् । कुरुते मानवो यस्तु कलौ भक्तिपरायणः कल्पकोटिसहस्राणि रमते हरिसन्निधौ ॥ स्कान्दे–नैवेद्यशेषं तुलसीविमिश्रं विशेषतः पादजलेन सिक्तम् । योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥ देहस्त्यजति पापानि ब्रह्महत्यायुतानि च । भुञ्जन्यो हरिनैवेद्यं देहान्ते मोक्षभाग्भवेत् ॥

धारापात्रके विष्टरकी गांठ खोलकर उन दो दर्भकाण्डोंको अग्र ऊपर करके मूलपर अक्षतों समेत अंगुलिमूलके उपर अंगूठेसे दबाकर घण्टा बजाते देवताके विसर्जनमें पढें जैसा कि उपर इनके आवाहन (२१ सफे) में पढा है ॥ 'अच्छिद्रं सम्पूर्णमऽस्तु' (मेरा यह सब कुछ किया हुआ कर्म किसी प्रकारके छिद्रके बिनाहो और पूराहो) पर अक्षतों को कन्धों पर से तथा दर्भकाण्डों को निर्माल्यपात्र में फेंकें ॥ और 'एवमऽस्तु' (तुम्हारी प्रार्थना ऐसी ही हो) इस वाक्यसे मन में निश्चय करें कि देवता प्रार्थना स्वीकार करते हैं ॥

ततः पृच्छां विसर्जयेत् । ॐ भूः पुरुषं विसर्जयामि नमः । ॐ भुवः पुरुषं विसर्जयामि नमः । ॐ स्वः पुरुषं विसर्जयामि नमः । ॐ भूर्भुवः स्वः पुरुषं विसर्जयामि नमः ३ । ॐ भूर्भुवस्स्वः तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो यो नः प्रचोदयात् ॐ ३ ॥ ॐ नमोऽस्त्वनन्ताय ३ इत्यादि । उपर के २१ सफेके आठवें पंक्तिसे लिखी पृच्छाकी तरह २६ सफेकी तीसरी पंक्तितक पढकर श्रीविष्णुपञ्चायतनपूजनमऽच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ दो हाथ जोडकर नैवेद्य खानेकी आज्ञा मांगें :—

आज्ञा मे दीयतां नाथ नैवेद्यस्यास्य भक्षणे । शरीरयात्रासिद्ध्यर्थं भगवन्दातुमर्हसि ॥ प्रत्येक श्लोकसे विष्णु को क्षमापुष्प चढावें

ॐ आपन्नोऽस्मि शरण्योऽसि सर्वावस्थोऽस्मि सर्वदा ।

भगवंस्त्वां प्रपन्नोऽस्मि रक्ष मां शरणागतम् ॥

ब्रह्मकलश हो तो उसको पुष्प [ईशान विष्णवेति, कलिकलशेति च कलशे ।] अब विष्णुको क्षमा पुष्प :-

ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान्कनककुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ यद्बाले यच्च कौमारे यद्यौवने कृतं मया । वयःपरिणतौ यच्च यच्च जन्मान्तरेष्वपि । तन्नारायण गोविन्द क्षमस्व गरुडध्वज ॥ नीलोत्पलदलश्यामः प्रफुल्लजलजेक्षणः । जलशायी जगद्योनिः प्रीयतां मम केशवः ॥ नारायणस्मरणनिर्वृतचित्तवृत्तिर्नारायणप्रणयपुण्यसरस्वतीकः । नारायणप्रणतिगर्भगुरूत्तमाङ्गो नारायणैकशरणः सुचिरं भवेयम् ॥ नारायणार्पितशुभाशुभसञ्चयाय नारायणं प्रति समाहितचेतनाय । नारायणः प्रभुरितिस्थिरनिश्चयाय व्यासाय वेदह-

रितत्त्वविदे नमस्ते ॥ अपराधसहस्रसंकुलं पतितं भीमभवार्णवोदरे । अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥ यच्चिन्तितं च मनसा वचसा यदुक्तं चक्षुःकरश्रवणपादविचेष्टितं च । यद्यन्निशासु दिवसेषु कृतं मयैव तत्तज्जनार्दन तवार्चनमेव भूयात् ॥ मा मे स्त्रीत्वं मा च मे दासभावो मा मूर्खत्वं मा कुदेशेषु जन्म । मिथ्यादृष्टिर्मा च मे स्यात्कदाचिज्जातौ जातौ विष्णुभक्तो भवेयम् ॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥ कीटेषु पक्षिषु मृगेषु सरीसृपेषु रक्षःपिशाचमनुजेष्वपि यत्र तत्र । जातस्य मे भवतु केशव त्वत्प्रसादात्त्वय्येव भक्तिरचलाऽव्यभिचारिणी च ॥ नमामि नारायणपादपङ्कजं करोमि नारायणपूजनं

सदा । वदामि नारायणनाम निर्मलं स्मरामि नारायणतत्त्वमव्ययम् ॥ करारबिन्देन पदारबिन्दं मुखारबिन्दे विनिवेशयन्तम् । अश्वत्थपत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥ श्रीवासुदेवानिरुद्ध प्रद्युम्नाधोक्षजाच्युत । श्रीकृष्णानन्त गोविन्द सङ्कर्षण नमोस्तु ते । नमः सहस्रशीर्षाय सहस्राक्ष नमोस्तु ते । सहस्राङ्घ्र नमस्तुभ्यं सहस्रदो नमो नमः । सहस्रनामन्देव त्वं प्रसीदाशु ममाच्युत । एषा मया कृता तेर्चा सर्वकामप्रदो भव ॥

येन गोवर्धनः शैलो गवां त्राणाय लीलया । धृतो वामकराग्रेण त्रायतां मां स माधवः ॥ भक्तिः कृष्णे मतिर्धर्मे शक्तिस्त्यागे रतिः श्रुतौ । दया सर्वेषु भूतेषु स्यान्मे जन्मनि जन्मनि ॥ मा जन्ममरणं देहि मा स्वर्गं मा च दारुणम् । अक्षयं परमं स्थानं देहि

मे मधुसूदन ॥ यत्कृतं यत्करिष्यामि तत्सर्वं न मया कृतम् । त्वया कृतं तु फलभुक्त्वमेव मधुसूदन ॥ यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः । यश्च सर्वमयो नित्यः तस्मै सर्वात्मने नमः ॥ भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारावृतानाम् । विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥ रजसि निपतितानां मोहजालावृतानां जननमरणदोलादुर्गसंसङ्गतानाम् । शरणमशरणानामेक एवातुराणां कुशलपथनियुक्तश्चक्रपाणिर्नराणाम् ॥ त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुस्त्वमेव । त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम वासुदेव ॥ नास्ति विष्णुसमो देवो नास्ति विष्णुसमः प्रभुः । नास्ति विष्णुसमः कश्चिन्महानरकमोचकः ॥

अशेषविश्ववैचित्र्यरचनारुचये नमः । मायागहन-
रूढाय नानारूपाय विष्णवे ॥ मङ्गलं भगवान्वि-
ष्णुर्मङ्गलं गरुडध्वजः मङ्गलं पुण्डरीकाक्षो मङ्ग-
लायतनं हरिः ॥ वैनतेयसमारूढो लक्ष्मीहृदयन-
न्दनः । शङ्खचक्रगदापद्मपाणिः पापहरो हरिः ॥
यस्य हस्ते गदा चक्रं गरुडो यस्य वाहनम् । शङ्खः
करतले यस्य स मे विष्णुः प्रसीदतु ॥ यस्य स्मर-
णमात्रेण जन्मसंसारबन्धनात् । विमुच्यते नमः
तस्मै विष्णवे प्रभुविष्णवे ॥ नमः समस्तभूताना-
मादिभूताय भूभृते । अनेकरूपरूपाय विष्णवे प्र-
भुविष्णवे ॥ हरो हरिर्हरो विष्णुर्जन्ममृत्युहरो ह-
रिः । कालपाशभयं नास्ति तं नमामि हरं हरिम् ॥
कृष्णाय वासुदेवाय देवकीनन्दनाय च । नन्दगो-
पकुमाराय श्रीकृष्णाय नमो नमः ॥ हा कृष्ण म-

नासि वासिन्क्वाऽसि यादवनन्दन । इमामऽवस्थां संप्राप्तमनाथं किं न रक्षसि ॥ या त्वरा द्रौपदीत्राणे या त्वरा गजमोक्षणे । मयि दीने दीनबन्धो सा त्वरा क्व गता हरे ॥ अहो बकीयं स्तनकालकूटं जिघांसया पाययदप्यसाध्वी । लेभे गतिं धात्र्युचितां ततोन्यं कं वा दयालुं शरणं प्रपद्ये ॥ अतसीपुष्पसङ्काशं पीतवाससमऽच्युतम् । ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥ अज्ञानान्धेन यत्किञ्चिन्मया खण्डं व्रतं कृतम् । भगवंस्त्वत्प्रसादेन तदखण्डमिहास्तु मे ॥ पाद्यं किं भवते भवेत्सुरसरित्पादोदकाय प्रभो को दीपस्तरणीक्षणाय गरुडारूढाय किं वाहनम् । किं भोज्यं जगदन्नदाय वसनं किं दिव्यवासोभृते किं स्तोत्रं निगमागमाय तदलं बद्धो मया प्राञ्जलिः ॥ पूजाविधिस्त्वया प्रो-

क्तः सम्पूर्णद्रव्यसञ्चयैः । कर्तुं न शक्यते कश्चिद्दे-
वगन्धर्वराक्षसैः । भक्तिमात्रावलम्बेन निरालम्भं
मया कृतम् । तत्सर्वं पूर्णमस्त्वद्य प्रसादात्तव के-
शव ॥ यथाहि भगवानेव वस्तुतः सदसच्च यत् ।
सत्येनाऽनेन ते सर्वे यान्तु नाशमुपद्रवाः ॥

इसी तरह प्रह्लादस्तुति आदिसे भी पुष्पपूजा करें ॥ प्रत्येकश्लोकसे शिवजीपर पुष्प चढावें

अथशिवस्य । करचरणकृतं वाक्कायजं कर्मजं वा श्रव-
णनयनजं वा मानसं वाऽपराधम् । विदितमविदि-
तं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहा-
देव शम्भो ॥ अनाथानां नाथो गतिरगतिकानां
व्यसनिनां विनेता भीतानामऽभयमधृतीनां भरव-
शः । सुहृत्स्वामी बन्धुः शरणमुपकारी वरगुरुः पि-
ता माता भ्राता त्रिजगति जयत्यन्धकरिपुः ॥ अ-

---

शिवजीके प्रियपुष्पः–अर्कपुष्प, करवीर, बिल्व, बकुल, धत्तूर, पाटला, मन्दार, तगर, पुन्नाग, शमी, जपाडीपुष्प, जातीपुष्प, पद्म, द्रोणपुष्प, नीलोत्पल, ॥ केतक और चम्पक यह दो पुष्प महाशिवरात्रिकी पूजामें ही कहे हैं । बाकी दिनोंमें निषिद्ध हैं ॥ करवीर और पङ्कजोंके बिना लाल पुष्पभी इसको न चढावें ॥ शङ्खसे इसका स्नान कभीन करें ॥

पारसंसारमहाम्बुधिप्लवः समस्तपापेन्धनहव्यवाहनः । विपद्द्रुमोन्मूलनचण्डमारुतो नमः शिवायेति ममास्तु सज्जपः ॥ सर्वज्ञ-शम्भु-शिव-शङ्कर-विश्वरूप-मृत्युञ्जयेश्वर-मृड-प्रभृतीनि देव । नामानि तेऽन्यविषये फलवन्ति किन्तु त्वं स्थाणुरेव भगवन्मयि मन्दभाग्ये ॥ शम्भो महेश शिव शङ्कर चन्द्रमौले हे विश्वनाथ मदनान्तक योगमूर्ते । आनन्दधाम शतिकण्ठ पिनाकपाणे गौरीपते मयि निधेहि कृपाकटाक्षम् ॥ श्रीविश्वनाथ करुणाकर शूलपाणे भूतेश भर्ग भुवनत्रयगीतकीर्ते । श्रीनीलकण्ठ मदनान्तक विश्वमूर्ते गौरीपते मयि निधेहि कृपाकटाक्षम् ॥ विश्वेश विश्वविलयस्थितिजन्महेतो विश्वैकवन्द्य शिव शाश्वत विश्वरूप । विध्वस्त काल भयवीत गुणावभास श्रीमन्महेश मम देहि

कृपाकटाक्षम् ॥ शम्भो शशाङ्ककृतशेखर शान्तमूर्ते गङ्गाधरामरवरार्चितपादपद्म । नागेन्द्रभूषण नगेन्द्रनिकेतनेश भक्तार्तिहन्मयि निधेहि कृपाकटाक्षम् ॥ अः किं न रक्षसि नयत्ययमन्तको मां हीलावलेपसमयः किमयं महेश । मा नाम भूत्करुणाया हृदयस्य पीडा व्रीडापि नास्ति शरणागतमुज्झतस्ते ॥ अज्ञोऽसि किं किमबलोऽसि किमाकुलोऽसि व्यग्रोऽसि किं किमघृणोऽसि किमक्षमोऽसि । निद्रालसः किमसि किं मदघूर्णितोऽसि क्रन्दन्तमन्तकदराक्ष्वमुपेक्षसे माम् ॥ शङ्करस्य च ये भक्ताः शान्तास्तद्गतमानसाः । तेषां दासस्य दासोहं भूयां जन्मनि जन्मनि ॥ हर शम्भो महादेव विश्वेशामरवल्लभ । शिव शङ्कर सर्वात्मन्नीलकण्ठ नमोऽस्तु ते ॥ तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर । यादृशो-

सि महादेव तादृशाय नमो नमः ॥ आधीनामऽग-
दं दिव्यं व्याधीनां मूलकृन्तनम् । उपद्रवाणां दल-
नं महादेवमुपास्महे ॥ देव देव महादेव शरणागत-
वत्सल । नान्यस्त्राताऽस्ति मे कश्चित्त्वदृते परमेश्वर ॥
अहं पापी पापक्षपणनिपुणः शङ्कर भवान् अहं भी-
तो भीताऽभयवितरणे ते व्यसनिता । अहं दीनो
दीनोद्धरणविधिसज्ञस्त्वदितरन्न जानेऽहं वक्तुं कुरु
सकलशोच्ये मयि दयाम् ॥ हरिणा चरणौ पुरा न
दृष्टौ विधिना तेन शिरोपि नैव दृष्टम् । कथमीश
करोमि साङ्गपूजां कृपया पाहि विचार्य किङ्करं मा-
म् ॥ अपराधो भवत्येव सेवकस्य पदे पदे कोऽपरः
सहते लोके केवलं स्वामिनं विना ॥ अपराधसह-
स्राणि क्रियन्तेहर्निशं मया । दासोऽयमिति मां म-
त्वा क्षमस्व वृषभध्वज ॥ योगीश्वराप्रमेयात्मन्देव-

देव जगत्पते । पाहि मां घोरसंसारसङ्कटात्परमेश्वर ॥ आत्मा त्वं गिरिजा मतिः परिजनः प्राणाः शरीरं गृहं पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः । सञ्चारोऽपि परिक्रमः पशुपते स्तोत्राणि सर्वा गिरो यद्यत्कर्म करोमि देव भगवंस्तत्तत्तवाराधनम् ॥

इसी तरह और श्लोक स्तोत्रपाठ आदिकोंसे भी पुष्पपूजा करें ॥
अब प्रत्येक श्लोकसे गणेशजी पर पुष्प चढावें ॥

अथगणेशस्य । बिभ्रद्दक्षिणहस्त० ॥ रक्ताङ्गरागं परश्वत्नमाल्यं स्वदन्तपाणिं सितलड्डुपात्रम् । गजाननं सिंहयुगाधिरूढं गणेश्वरं विघ्नहरं नमामि ॥ सिन्धूरकुङ्कुमहुताशनविद्रुमार्करक्ताब्जदाडिमनिभाय चतुर्भुजाय । हेरम्भभैरवगणेश्वरनायकाय सर्वार्थसिद्धिफलदाय गणेश्वराय ॥ गणानामधिपश्चण्डो गजवक्त्रास्त्रिलोचनः । प्रसन्नो भवतां नित्यं वरदा-

---

गणेशजीके प्रियपुष्प विष्णुकेही जो प्रियपुष्प हैं । लालरङ्गके तो अधिक प्रियहैं । तुलसीसे इसको न पूजें ॥

ता विनायकः ॥ सर्गारम्भेप्यजाताय बीजरूपेण तिष्ठते। धात्रा कृतप्रणामाय गणेशाय नमो नमः ॥ नमस्ते गजवक्त्राय नमस्ते गणनायक ! विनायक नमस्तुभ्यं नमस्ते चण्डविक्रम ॥ नमस्ते विघ्नहर्त्रे च प्रलम्बकुटिलानने। सर्वदेव नमस्तुभ्यं विनायक नमोऽस्तु ते ॥ माता यस्य उमादेवी पिता यस्य महेश्वरः। मूषको वाहनं यस्य स नः पायाद्गणाधिपः ॥ नमो नमो गजेन्द्राय एकदन्तधराय च। नम ईश्वरपुत्राय गणेशाय नमो नमः ॥ योऽभ्यर्चितः० ॥ लम्बोदरैकवदनः इत्यादि ॥ इसी तरह और स्तोत्रपाठोंसे भी पुष्पपूजा करें ॥ प्रत्येक श्लोकसे सूर्यदेवता पर पुष्प चढावें अथसूर्यस्य। नमो नमः पापविनाशनाय विश्वात्मने सप्ततुरङ्गमाय। धाम्नामऽधीशाय भवाभवाय पापौघदावानलशान्तिकर्त्रे ॥ जातवेदप्रकाशाय ज्योतीरूपसमुद्भव। सप्ताश्वरथवाहाय भास्कराय

नमो नमः ॥ नमो धर्मनिदानाय नमः सुकृतसाक्षिणे । नमः प्रत्यक्षदेवाय भास्कराय नमो नमः ॥ अपरः शरणं नास्ति त्वमेव शरणं मम । तस्माच्छरण्यभावेन रक्ष रक्ष दिवाकर ॥ आदित्याय नमस्कारं ये कुर्वन्ति दिने दिने । जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥ सप्तजन्मकृतं पापं वाङ्मनःकायकर्मजम् । तत्सर्वं विलयं यातु त्वत्प्रसादाद्दिवाकर ॥ यस्योदयेनेह जगत्प्रबुध्यते प्रवर्तते चाखिलकर्मसिद्धये । ब्रह्मेन्द्रनारायणरुद्रवन्दितः स नः सदा यच्छतु मङ्गलं रविः ॥ इसी तरह और २ स्तोत्रपाठोंसे भी पुष्पपूजा करें

अब देवीको पुष्प चढावें :—

स्तुता सुरैः पूर्वमभीष्टसंश्रया० ॥ शब्दब्रह्ममये स्वच्छे देवि त्रिपुरसुन्दरि । यथाशक्ति जपं पूजां गृहाण परमेश्वरि ॥ शरणं त्वां प्रपन्नोस्मि सर्वभावे-

---

सूर्यदेवताके प्रियपुष्प विष्णुकेही जो प्रियपुष्प हैं । लालरङ्गके तो अधिक प्रिय हैं ॥

न सर्वदा । अम्ब त्वमेवजानासि कर्तव्यं शरणागते ॥ दर्शनात्पापशमनी जपान्मृत्युविनाशिनी । पूजिता दुःखदौर्भाग्यहरा त्रिपुरसुन्दरी ॥ देवि प्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य । प्रसीद विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य ॥ ये देविदुर्धरकृतान्तमुखान्तरस्था ये कालि कालघनपाशनितान्तबद्धाः । ये चण्डि चण्डगुरुकल्मषसिन्धुमग्नास्तान्पासि मोचयसि तारयसि स्मृतैव ॥ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि । दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय दयार्द्रचित्ता ॥ पार्श्वस्थो दवदहनः सिंहः पुरतोऽस्ति लुब्धकः पश्चात् । इति सङ्कटपतितं मां शरणं हरिणारिवाहने पाहि ॥ शरणागतदीनार्तपरित्राणपरा-

---

देवीके प्रियपुष्प प्रायः शिवजीके जो प्रियपुष्प हैं । दूर्वासे दुर्गाको न पूजे ॥

यणि । सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ तां भवानीं भवानीतक्लेशनाशविशारदाम् । शारदां शरदम्बोदसितसिंहासनां नुमः ॥ बीजैःसप्तभिरुज्ज्वलाकृतिरसौ या सप्तसप्तिद्युतिः सप्तर्षिप्रणताङ्घ्रिपङ्कजयुगा या सप्तलोकार्तिहृत् । काश्मीरप्रवरेशमध्यनगरे प्रद्युम्नपीठे स्थिता देवीसप्तकसंयुता भगवती श्रीशारिका पातु नः ॥ बालार्ककोटिद्युतिमिन्दुचूडां वरासिचक्राभयबाहुमाद्याम् । सिंहाधिरूढां शिववामदेहलीनां भजे चेतसि शारिकेशीम् ॥ या द्वादशार्कपरिमण्डितमूर्तिरेका सिंहासनस्थितिमतीमुरगैर्वृतां च । देवीमनक्षगतिमीश्वरि त्वां प्रपन्नः तां नौमि भर्गवपुषं परमार्थराज्ञीम् ॥ उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां सिंहासनोपरिगतामुरगोपवीताम् । खड्गाम्बुजाढ्यकलशामृऽतपात्रहस्तां राज्ञीं-

भजामि विकसद्वदनारबिन्दाम् ॥ ज्वालापर्वतसंस्थितां त्रिनयनां पीठत्रयाधिष्ठितां ज्वालाडम्बरभूषितां सुवदनां नित्यमदृश्यां जनैः । षट्चक्राम्बुजमध्यगां वरगदाम्भोजाभयान्बिभ्रतीं चिद्रूपां सकलार्थदीपनकरीं ज्वालामुखीं नौम्यहम् ॥ ज्वालामुखे महाज्वाले ज्वालापिङ्गललोचने । ज्वालातेजे महातेजे ज्वालामुखि नमोऽस्तु ते ॥ शङ्खको पुष्प दर्शनेनापि शङ्खस्य किं पुनः स्पर्शने कृते । विलयं यान्ति पापानि तमः सूर्योदये यथा । कल्पकोटिसहस्राणि वर्षकोटिशतानि च । वसते देवलोके तु अप्सरोगणसेवितः। सफलमस्तु मे पूजा पाञ्चजन्य नमोऽस्तु ते ॥ घंटाको पुष्प मम नामाङ्कितां घण्टां सुदर्शनयुतां यदि । ममाग्रे स्थापयेद्यस्तु गेहे तस्य वसाम्यहम् ॥ आयान्ति देवताः सर्वे मम शब्दात्सुशोभनात् । दूराद्दूरतरं यान्ति पि-

शाचा राक्षसादयः । स्वस्थानं गच्छ देवि त्वं देवदू-
ति नमोऽस्तु ते ॥ विष्णुको आह्वानं नैव जानामि नैव
जानामि पूजनम् । पूजाभागं न जानामि क्षम्यतां
परमेश्वर ॥ नमस्कार करकर पढें मन्त्रहीनं क्रियाहीनं विधि-
हीनं च यद्गतम् । तत्सर्वं क्षम्यतां देव कृपया पर-
मेश्वर ॥ यदक्षरपदभ्रष्टं मात्राहीनं च यद्गतम् ।
त्वया तत्क्षम्यतां देव कृपया पुरुषोत्तम ॥
अब अष्टाङ्ग प्रणाम करें-(दो घुटने दो हाथ सिर और छाती देवताके सामने पृथिवीके
साथ मिलाकर मनको प्रणामके सङ्कल्पमें लगाकर वाणीसे नमस्कार शब्द उच्चारनेको
अष्टाङ्ग प्रणाम कहते हैं) उभाभ्यां जानुभ्यां पाणिभ्यां शिर-
सा उरसा मनसा वचसा नमस्कारं करोमि नमः ॥
अक्षत दूध और जलसे तर्पण करें नमो ब्राह्मण इति तर्पणम् । नमो ब्रह्म-
णे । नमो अस्त्वग्नये । नमः पृथिव्यै । नम ओष-
धीभ्यः । नमो वाचे । नमो वाचस्पतये । नमो वि-
ष्णवे । बृहते कृणोमि ॥ ३ ॥ इत्येतासामेव देवता-

नां सार्ष्टिं सायुज्यं सलोकतां सामीप्यमाप्नोति य एवं विद्वान् स्वाध्यायमधीते ॥ इसी जलसे माथेको छिड़काकर अब पढ़िके नीचेके प्रत्येकनामसे क्रमसे विष्णु शिव और देवीके भगतोंको चरणामृत देवें ॥ ततश्चरणोदकम् । बलिर्विभीषणो भीष्मः प्रह्लादो नारदः (ध्रुवः) शुकः । षडेते वैष्णवश्रेष्ठा गृह्णन्तु चरणोदकम् ॥ बाणरावणचण्डीश नन्दिभृङ्गिरिट्यादयः । पञ्चैते शाम्भवश्रेष्ठा गृह्णन्तु चरणोदकम् ॥ ब्रह्मा विष्णुश्च रुद्रश्च सोमः शुक्रः पुरन्दरः । शाक्ताः षडिति संप्रोक्ता गृह्णन्तु चरणोदकम् ॥ अब देवता ऋषि और पितरोंको भी देवें ॐ नमो देवेभ्यः कण्ठोपवीती । स्वाहा ऋषिभ्यः अपसव्येन । स्वधापितृभ्यः सव्येन । आब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराचरं जगत्तृप्यतु तृप्यतु तृप्यतु ॥ अब प्रतिमासे पुष्पमात्र उठाकर सूंघें उसकी सुगन्ध हृदयमें ले रखें ॥

---

नृसिंहपरा–गङ्गाप्रयागगयपुष्करनैमिषाणि पुण्यानि यानि कुरुजाङ्गलयामुनानि । कालेन तीर्थसलिलानि पुनन्ति विष्णोः पादोदकं भगवतः प्रपुनाति सद्यः ॥ विष्णुरहस्ये–विष्णुपादोदकं पीत्वा सालिग्रामसमुद्भवम् । विशेषेण हरेत्पापं ब्रह्महत्यादिकं नृणाम् ॥ विष्णुपादोदकं पीत्वा पश्चादशुद्धशङ्कया य आचमति संमोहाद्ब्रह्महत्यां स विन्दति ॥ वृ०नार०–तुलसीदलसंमिश्रं जलं सर्षपमात्रकम् । गङ्गायास्तु पुनात्येवं कुलानामेकविंशतिम् ॥

पूजितोऽसि मया भक्त्या भगवन्कमलापते । सलक्ष्मीको मम स्वांतं विश विश्रान्तिहेतवे ॥ ईशान सर्वदेवानामाकार जगतां पते । मन्दिरं गच्छ देवेश पुनरायाहि शङ्कर ॥ अब सर्षपका दाना जितनेमें डूबे उतना चरणामृत, परुष दाईं हथेलीके मध्यमें लेके और इस हाथके नीचे बायां हाथ रखके आचमनकी तरह शब्दके बिना पीवें, स्त्री पात्रमें लेके पीवे। अशुद्ध हाथ भी होवे धोना न चाहिये। पीकर इसी हाथकी गीलाईसे सिर और नेत्रोंका भी स्पर्श करें॥

देवदेव जगन्नाथ शङ्खचक्रगदाधर । देहि विष्णो ममानुज्ञां पादोदकनिषेवने ॥ चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेमामरलोकस्य द्वारमर्चिषमत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वदमृतस्य धारा बहुधा दोहमानममृतस्य लोके चरणं स्वधां ददातु ॥ अकालमृत्यु ... र्वव्याधिनिवारणम् । विष्णुपादोदकं पीत्वा ... यते ॥ अच्युतानन्तगोविन्दनामोच्चा ... नशन्ति सक-



ला रोगाः सत्यं सत्यं वदाम्यहम् ॥ गङ्गापुष्करनर्मदामधुमतीगोदावरीगोमतीगङ्गाद्वारवतीप्रयागबधिरावाराणसीसिन्धुषु । कन्यासेतुसरस्वतीभगवतीब्रह्माण्डभाण्डोदरीतीर्थकोटिसहस्रस्नानफलदं श्रीविष्णुपादोदकम् ॥

अब नैवेद्य खाकर पूजास्थानपर पडे निर्माल्यजलबिन्दु अक्षत पुष्प आदि सब चीजोंको निर्माल्यपात्र में उठाकर इसभूमिको लेपन करके निर्माल्यपात्रमें हाथ धोवें, प्रणामकरके भगवान् कीतरफ पीठ करनेके बिना ही पूजास्थानसे गृहस्थाश्रमके कार्यके वास्ते निकले । परन्तु निर्माल्यजलको पहले नदीमें छोडआवें ॥ यादरखें कि सायंकालके समय इसस्थानमें भगवान् के सामने पूर्वको मुखकरके नित्य दीप रखाकरें ।

---

विनापवित्रं पीतव्यं चरणोदककं हरेः । पात्रपीतं भवेद्रक्तं स्त्रीणां तल्लयो भवेत् ॥ करे धृत्वा तु पीतव्यं नृणां पादोदकं हरेः । पात्रे धृत्वा तु पीतव्यं स्त्रीणां चैव विशेषतः ॥

विष्णुमन्दिरगमनमाहात्म्यं पाद्मे—यावत्पदान्द्विजश्रेष्ठ गच्छेयुर्हरिमन्दिरम् । तावद्वर्षसहस्राणि मोदन्ते विष्णुसन्निधौ । पदेपदेऽश्वमेधस्य फलमाप्नोति मानवः ॥ सालिग्रामोद्भवं चक्रं चक्रं द्वारावतीभवम् । उभयोः पूजनं यत्र मुक्तिस्तत्र न संशयः ॥ बृहन्नारदीये—स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर । स्पर्शने नाधिकारोऽस्ति विष्णोर्वा शङ्करस्य च ॥ लेपनमार्जनमाहात्म्यं स्कन्दे—यस्तु संमार्जनं कुर्यात्कृष्णवेश्मनि लेपयन् । स पापकलहं देहं त्यक्त्वा याति परां गतिम् ॥ यस्तु समार्जनं कुर्याद्ब्रह्महापि हरेर्गृहे । सोऽपि याति परं धाम किमन्यैर्बहुभाषितैः ॥ समार्जनं विष्णुगृहे जनः कृत्वोपलेपनम् । लभते परमं धाम पूजायाः फलवत्प्रभोः ॥ मस्तके दृश्यते यस्य विष्णोर्निर्माल्यमुत्तमम् । स विज्ञेयो द्विजश्रेष्ठ साक्षादेव हरिः स्वयम् ॥ विष्णोर्निर्माल्यशेषेण यो गात्रं परिमार्जयेत् दुरितानि विनश्यन्ति व्याधयो यान्ति दूरतः ॥

इति श्रीविष्ण्वादिपञ्चायतनपूजनं समाप्तम् ॥

शुभाय भूयात् ॥

